विवर्तमाने रजसी ततोऽभूत् वैश्वानरोऽग्निः स तमो निहन्ति ॥ ४३ ॥
यदा भरद्वाज उवाच पृथ्वी रजोऽहरेकं नदिद द्विधाऽभूत् ॥
शुक्लं च कृष्णं च तदर्द्धमर्द्धं पर्यायतो आयत एनदग्रे ॥ ४४ ॥

## पृथ्वीसूर्य्ययोः पौर्वापर्य्यविचारः

१—द्यौः सूर्यरूपा तपनीह या वा पृथ्वी प्रतिष्ठा प्रतितिष्ठनीयम् ॥
का तत्र पूर्वा कतरा पराभूदित्थं विपृच्छास्ति विदां समाजे ॥ १ ॥
तत्राग्निहोत्रे किल याज्ञवल्क्यः प्रवक्ति पृथ्वी समभूदिहाद्यः ॥
*प्रजापतिस्तत्र य आस तस्मात् पृथ्वी रसोऽग्रेऽग्निरजायतास्मात् ॥ २ ॥
प्राणः प्रजापत्यभिधोऽग्र आसीत् तथाग्निना तन्महिमाऽभयद्वाक् ॥
वाचेऽर उत्पाद्य तदप्सुविष्टः पृथ्वीं ससर्जौधिरभूदिहाग्निः ॥ ३ ॥
आसीदियं वै पृथिवी तदा काल्वालीकृता नौषधिरत्र पृथ्व्याम् ॥
आसीत्तदानीं न वनस्पतिर्या प्रजापतिं भोक्तुमगात् ततोऽग्निः ॥ ४ ॥
प्रजापतेर्याम् महिमा स यः स्वः सोऽप्यपचक्राम ततोऽग्नयेऽस्मै ॥
इहौषधिः सोऽन्नमभूत् ततो वाग् भूयोपचक्राम स एव सूर्यः ॥ ५ ॥
तस्मादयं वायुरभूत् तदित्थं पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥
बृहस्पतेश्चाप्यदितेर्मतेऽसौ पूर्वं पृथिव्यास ततोऽभवद् द्यौः ॥ ६ ॥
पुत्रं परस्तात् पितरं स्ववस्तादपि भरद्वाज इहानुवक्ति ॥
तथाग्निपुत्रो वदते स केतुर्वैश्वानराग्नेरविरुद्धवर्द्ध ॥ ७ ॥
नाहं तन्तुं न विजानाम्योतुं न यं वयन्ति समरेऽतमानाः ॥
कस्य स्वित् पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥ ८ ॥

[ ऋ. सं. ६ मं. ६ सू. ]

प्राग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि दधज्ज्योतिर्जनेभ्यः ॥ १ ॥

[ ऋ. सं. १० । १५६ ]

---

*प्रजापतिर्ह वा इदमग्र एक एवास । सऐक्षत—कथं नु प्रजायेयेति । सोऽश्राम्यत् स तपोऽतप्यत । सोऽग्निमेव मुखाज्जनयांचक्रे । तद् यदेनं मुखादजनयत तस्मादन्नादोऽग्निः । स ऐक्षत प्रजापतिः—अन्नाद वा इममात्मनोऽजीजने यदग्निम् । न वा इह मदन्यदन्नमस्ति यं वा अयं नाद्यादिति । काल्वाली कृता हैव तर्हि पृथिव्यास । नौषधय आसुर्न वनस्पतयः । तदेवास्य मनस्यास । अथैनमग्निर्व्यात्तेनोपपर्यावर्त । तस्य भीतस्य स्वो महिमापचक्राम । वाग् वा अस्य स्वो महिमा वागस्यापचक्राम । स आत्मन्नेवाहुतिमीषे स उदमृष्ट । तत्र विवेद घृताहुतिं वैव पय आहुतिं वा—उभयं हत्वेव तत्पय एव । सा हैनं नाभिराधयांचकार । केशमिश्रेव हास । तां व्यौक्षद् ओषधयेति । तत ओषधयः समभवन् ॥ स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पय आहुतिं वा । सा हैनमभिराधयांचकार । सोऽजुहोत् । तत एव उदियाय य एव तपति । ततोऽयं प्रबभूव—योऽयं पवते । तत एवाग्निः पराङ् पर्यावर्त स हुत्वा प्रजापतिः प्र चाजायत—अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत ॥ [ शत. २ कां. २ प्र. २ ब्रा. ]

परे ब्रुवन्तीह पुराभवद् द्यौस्ततः पृथिव्यस्ति यतस्त्रिधाग्निः ॥
तथामभूदुत्तमतोऽयमग्निर्यो मध्यमो यः प्रथमः प्रतीतः ॥ १० ॥
आकाशवाय्वग्निजलक्षितीनां क्रमेण सृष्टिं वदतां न पृथ्वी ॥
प्राक् सूर्यतः संभवतीति हेतोरग्नेरयं सृष्टिरभूत् ततोऽस्याः ॥ ११ ॥
स भौवनः प्राह तु विश्वकर्म्मा द्यावापृथिव्यौ सह ते अभूताम् ॥
गर्भे यथा संभवतीह जन्तोर्गशीर्षमापादतलं सहैव ॥ १२ ॥
*इमौ सहैवासतुरेतदग्रे लोकौ न तु द्यौः पृथिवी पृथक् स्तः ॥
काले कुतश्चिद् वियतोस्तयोर्योऽन्तरावकाशस्तदिहान्तरिक्षम् ॥ १३ ॥
इत्थं विदुस्तैत्तिरयश्च पूर्वे स याज्ञवल्क्यश्च तथा ब्रवीति ॥
तेषां मते लोकमिदं त्रिधाऽभूद्देयं तथासौ वियदन्तरिक्षम् ॥ १४ ॥
यन्मण्डलं सौरमहोऽस्ति तस्य ग्रहा अनेके परितः क्रमन्ते ॥
पर्य्येति योऽन्त्यो ग्रह एषु तावन्मितः कदाचिद् रविकाय आसीत् ॥ १५ ॥
ज्योतिश्चय(स्मा रविरेव तावान् विवर्तमानः स गतेरसाम्यात् ॥
विच्छेदयंस्तीव्रगतिं निजान्त्यरन्तरं ग्रहं तेन विनिर्म्ममे स्वम् ॥ १६ ॥
तथैव चार्वाक् च तथैव चार्वाक्—इत्थं ग्रहांस्तान् बहुधा विधाय ॥
गृह्णाति तानात्मभवानिदानीमपि स्वपर्य्यन्तपथप्रचारान् ॥ १७ ॥
अल्पाल्पमात्रत्ववशादमीषां ज्योतिः क्रमाद्ध्रासमगाद् ग्रहाणाम् ॥
आत्यन्तिकाग्निक्षयतस्तु चन्द्रादयः क्रमाद् यान्ति विनाशमन्ते ॥ १८ ॥
इत्थं विदुः केपि सहैककायात् पृथ्वीषु जातास्ववशिष्यतेऽर्कः ॥
आरम्भणानां रजसां सहत्वाद् द्यावापृथिव्योः सह संभवोऽन्यः १९ ॥
"कतरा पूर्वा कतरा पराऽयोः कथा जाते कवयः को विवेद ।
विश्वं त्मना बिभृतो यद्ध नाम विवर्तेते अहनी चक्रियेव॥२०॥ ऋ. सं. १ मं. १६५ सू. १
इत्थं दुरूहत्वमुशन्ति पौर्वापर्य्येऽनयोः स्पष्टमृषिस्तु गृत्सः ॥
यद्वन्न सत्यं तदिहास्ति चिन्त्यं न स्वयं यावद् ध्रियते यथावत् ॥ २१ ॥
अथेतरेऽर्थांश्च इमे त्विदानीं पश्यन्ति *केचित्पुनरन्यथैव ॥
केतुश्च सूर्यश्च मही च चन्द्रः क्रमेण चत्वार इमे भवन्ति ॥ २२ ॥
वियत्यकस्मादयमग्निरेनं सोमं स्वदन् प्रज्वलिति प्रसह्य ॥
स आहरन् सोममतीव दिग्भ्यः क्रमाज्ज्वलत्पिण्डमधत्त नाभौ ॥ २३ ॥
ज्वालामयः पूर्वमभूत् स केतुर्ज्वालां स कृत्स्नां क्रमशः प्रगृह्य ॥
पिण्डात्मतां याति स भाति सूर्य्यः सर्वेऽपि केतुप्रभवा हि सूर्याः ॥ २४ ॥
क्रमेण सूर्य्योऽग्निरयं ह्रसित्वा क्षारं बहिर्भागत निधाय काये ॥
अन्तर्भवन् संकुचितक्रमोऽसौ ज्वालां जहातीति मवेदियं भूः ॥ २५ ॥

---

*द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम्—अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् तदस्यामदधात् । तदुदश्चन्द्रमसि कृष्णम् । ( तै. सं. ५ । २ । ३ तै. ब्रा. १ । २ । ३ ताण्ड्य ब्रा. ७ । १० ) अनया श्रुत्या पृथ्वीचन्द्रयोः सजातत्वं लभ्यते न तु पृथ्वी-सूर्य्ययोः । तथाप्यन्यत्र चन्द्रस्यान्तरिक्षवर्तित्वश्रवणादिह पृथ्वीसूर्य्ययोर्वियतोरेव वियत्त्वमभ्युपगच्छन्ति । अथवास्तु चन्द्रपृथिव्योरपि सृष्ट्यादौ सहावस्थानम् ॥

सोमोऽन्तरे यत्र चादित्यतोऽग्निर्भाम्यन् स सूर्य्यस्तपतीममश्नन् ॥
सोमो यदिद्धोऽन्ततोऽग्निरस्याः पृथ्व्या अतेजास्थिनि पार्थिवे च ॥ २६ ॥
यत्र त्वमुष्याः क्रमशः पृथिव्याः कृत्स्नोऽपि सोऽग्निः क्षयमाससाद ॥
विनिःसृताग्निः स तदेव चन्द्रो विशुद्धसोमात्मक उद्बभूव ॥ २७ ॥
चन्द्रस्य चान्ये परितः क्रमन्ते गन्धर्वसंज्ञा अपि ताननूक्ताः ॥
नेद्धा प्रदृश्यन्त इति स्म हेतोरेतद्द्वयं नात्र विशिष्य वच्मि ॥ २८ ॥
गन्धर्वतामेत् तु कदाचिदुक्ता गन्धर्व आसीदपि जातु चन्द्रः ॥
य एष चन्द्रः परितः पृथिव्याः पर्य्येति पूर्वं पृथिवीयमासीत् ॥ २९ ॥
इयं तु पृथ्वी द्युमणिः पुरासीत् सूर्य्यस्तु केतुः स कदाचिदासीत् ॥
ये केतवः सन्ति त एव काले सूर्य्या भविष्यन्ति परे परेऽपि ॥ ३० ॥
केतुस्त्वकस्मात् स्वयमेव भूत्वा कालेन सूर्य्यं भ्रमति क्षितिश्च ॥
चन्द्रः क्रमादग्निनिरस्तकायः क्षीणोऽन्यदृश्योऽपि विलीयते खे ॥ ३१ ॥
सूर्य्योऽग्निहेतोः पृथुलोऽस्ति पिण्डः पृथ्वी ततोऽल्पास्ति ततोऽपि चन्द्रः ॥
सर्वस्ततोऽन्यन्यपथक्रमायाः सोल्कमा यान्ति निपातमुल्काः ॥ ३२ ॥
अग्निस्त्वहोरात्रिरयं तु सोमस्तयोर्मिथः संगतयोर्बलेन ॥
पर्य्यायतोऽन्तस्त्वनदिद्धयोगाच्चत्वार एते प्रभवन्ति मासाः ॥ ३३ ॥
चिरेण पर्य्यायमुपेत्य सोऽयं सृष्टिक्रमः संभवते चतुष्पात् ॥
सृष्टिक्रमाणां तु चतुष्पदा स्याद्देशेऽपि कालेऽपि बहुत्वमेषाम् ॥ ३४ ॥

इति पृथ्वीसूर्य्ययोः पौर्वापर्य्यम् ॥

## द्यावापृथिव्योः स्वरूपम् ॥

द्यौः कोऽर्थ इत्यत्र मतद्वयं स्यात् प्राधान्यतस्तत्र च केचिदाहुः ॥
सूर्येन्दुताराग्रहसंकुलाङ्गं यद् दृश्यते व्योम तदस्ति सा द्यौः ॥ १ ॥
द्यौरेव संवत्सर उच्यते रवेर्यावान् प्रकाशः परित प्रवर्तते ॥
तदेवचक्रं स्वरला हि देवता मिथोऽन्वयादत्र किलैकतां गता ॥ २ ॥
संवत्सरो देवसमुच्चयोऽथवा गावोऽथवा सर्वरसप्ररोहणाः ॥
द्यौरुच्यते व्योम तु लक्षितं हि तैस्ततो हि गोदेवकुलप्रवृत्तयः ॥ ३ ॥
यावत्तु सूर्येण निभास्यते तद् ब्रह्माण्डमेतस्य कपालमर्द्धम् ॥
शर्द्धार्कभक्तं दिवमाहुरर्द्धं कपालमुर्वीघटितं तु पृथ्वी ॥ ४ ॥
* पृथ्वीयमेका वहुलेव ता मत्युधामिमी द्यौश्च तथान्तरिक्षम् ॥
यथान्तरिक्ष खलु सेलयेव प्रतीयते तद्वदिय मता द्यौ ॥ ५ ॥ शत २।१।२।१६
ते सूर्यचन्द्रोडुगणा यतस्त्वाञ्जरभासित यस्या प्रवदामि ता द्याम् ॥
पृथ्वी तु यस्या उपरिस्थ लक्ष्मापोऽग्नि प्रभा ओषधयो वनानि ॥ ६ ॥
शत १।२।२
सूर्य्योऽप्यमुत्राभिधावति धामसं स यत् धावति चाभिपृथ्वीम् ॥
वृत्तार्धवद् द्यौरिह दृश्यतेऽसौ पृथ्वी समा दर्पतलानुकारा ॥ ७ ॥
शत १ का २ प्र. २ ब्रा

---

* यद्भुलेव वा इयं पृथिवी । खेलयेवान्तरिक्ष खेलयेवासौ द्यौ । उभे चिद्देना मत्युधामि-मीरनामिति ॥ ( शत. २।१।२।१६ )

* सूर्यस्तु न द्यौः स हि मध्यतस्तान् लोकान् विवृण्वन् वृणुते दिशश्च ॥
इत्याहयत्सार महर्षिरेवं बृहस्पतिर्वा नकुलोऽप्यवोचत् ॥ ८ ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमत सुरुचो वेन आव ॥
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ९ ॥
( य. सं. १३।१ ) सा. सं. ४।३।९। अथर्व. स. ४।१।१ शत ७।२।६
पृथ्वी च सा द्यौश्च यथेह रूपं विधाय सर्गं कुरुते समग्रम् ॥
तत् काश्यपं रूपमतस्तमाहुः कूर्मं प्रजापत्यवतार एषः ॥ १० ॥
द्यौः कश्यपस्योर्द्ध्वकपालमस्यैवाधः कपालं पृथिवी तदित्थम् ॥
द्यावापृथिव्यः स हि कूर्म उक्तः प्रजापतिः कश्यपरूप एकः ॥ ११ ॥
सर्वं जगत् कश्यपतः प्रजातं च कश्यपो द्यौः सहिता पृथिव्या ॥
रसप्रदो द्यौः स पिताऽथ माता योनिः पृथिव्यस्ति ततोऽस्ति सृष्टि ॥१२॥
मतान्तरे व्योम न केवलं द्यौस्तत्वानिरुक्तं तदिहान्तरिक्षम् ॥
पृथ्वीव सा द्यौश्च निरुक्तरूपावकल्पते मूर्तिमती प्रकाश्या ॥ १३ ॥
येयं प्रतिष्ठा पृथिवी मता सा यः सूर्य एषोऽस्ति दिवं तमाहुः ॥
द्यौरस्त्यहो रात्रिरियं तु पृथ्वी मध्ये तयोः सान्ध्यमिवान्तरिक्षम् ॥ १४ ॥

## द्यावापृथिव्योरसाम्यां शरीरात्मानः ॥

येयं पृथिव्यस्ति जगत् प्रतिष्ठा वृत्तानुकाराऽखिलभूतयोनिः ॥
सात्री तथाद्या च दिवोऽथ सा द्यौरत्री तथा द्या च भवेत् पृथिव्याः ॥ १५ ॥
सोमोऽयमन्यः स मतोऽन्तरिक्षे ततोऽप्यश्ग्निरयमेतदस्ति ॥
सोमोऽयमन्नं जनयत्यथैते त्रयोऽग्नयोऽन्नाद इति ब्रुवन्ति ॥ १६ ॥
प्रत्येकमग्निं द्विविधं प्रतीयाच्चित्यं तथा तत्र चिते निधेयम् ॥
रयिर्धयुश्चित्यमिदं बहिर्वा प्राणोऽयमात्माऽन्तरतो निधेयः ॥ १७ ॥
चित्यो यथाधिक्षितिभूतसंघश्चित्यस्तथा दिव्यपि देवसंघ ॥
प्राणो निधेयस्तु चिते स भूमावग्निः प्रसिद्धः स दिवीन्द्र उक्तः ॥ १८ ॥
चित्योऽन्तरिक्षेऽस्ति च वायुरन्यः स स्पर्शलक्ष्यो मृदवग्नियोग्यः ॥
चिते निधेयः पुनरन्यवायुः प्राणोऽस्पृशन् सोऽखिलदेवयोग्यः ॥ १९ ॥
प्रज्ञामयः प्राण इहोमयास्मिन् सोऽन्योन्य आत्मास्ति दिशो भुवश्च ॥
दिव्यात्मनो दैविकमस्ति देहं भौमात्मनो भौतिकमेनदाहुः ॥ २० ॥
आकाशवाय्वग्निजलानि मृत्सा पञ्चेह भूतानि भवन्ति पृथ्व्याम् ॥
एकैकभेदे च भवन्ति भेदा नाना विधास्तैर्निचितास्ति पृथ्वी ॥ २१ ॥
तथाग्निवाय्विन्द्रदिगिन्दुभेदात् पञ्चेव देवा दिवि संनिविष्टाः ॥
एकैकभेदे च भवन्ति भेदा नानाविधास्तैर्निचितास्त्यसौ द्यौः ॥ २२ ॥
चिते निधेयेन सहैव चित्यो दिव्यश्च भौमश्च परस्परेण ॥
संसृज्य सत्वं सृजतस्ततोऽस्मिन् आत्मद्वयं भाति वपुर्द्वयं च ॥ २३ ॥

---

* अवस्ताद्धि दिव आदित्य —इति श्रुतेः सूर्याद् भिद्यते द्यौः ॥ शत ९।२।३।२।

यथा पृथिव्योर्यदिदं निरुक्तं तथान्तरीक्ष्यं पुनरत्र विद्यात् ॥
आत्मा शरीरं च यदन्तरिक्षाद् वायव्यमध्यात्ममिदं प्रतीयात् ॥ २४ ॥
तौ प्रक्रमैः पञ्चभिरत्र विग्रहे स्यातां नियुक्तौ धुरमावनीरसौ ॥
पश्याम्यधिष्ठातृपवित्रजीवनाधियज्ञसाधारणभेदतो हि नौ ॥ २५ ॥

## मूलं हंसः शिव इति वैशेषिकात्मतन्त्रम् ॥

तथा ह्यधिष्ठातृतयात्र विग्रहे स्यातां यथा तौ नु तथा प्रवीम्यहम् ॥
आजन्मसिद्धावपि कालतः क्रमादुपेत्य पोषं प्रतितिष्ठतो दृढम् ॥ १ ॥
मूलं शिवश्चेह निजं निजं तनौ तन्त्रं विनिर्वाहयतः पृथक् पृथक् ॥
एकैकतन्त्रे च पृथक् पृथक् पुनस्तन्त्राण्यनेकानि वितत्य रक्षतः ॥ २ ॥
मूलं स आत्मास्ति शिवः स आत्मा कलेवरे भौतिकदैविके द्वे ॥
यद्भौतिकं तत्र तु मूलमीष्टे शिवोऽधितिष्ठत्यपि दैविकं तत् ॥ ३ ॥
पृथ्वीरस मूलमिहास्य देहे स्याद् ब्रह्मग्रन्थिः परमा प्रतिष्ठा ॥
तं ब्रह्मग्रन्थिं प्रवदन्ति मूलाधारं ततः प्रस्फुरतीदमङ्गे ॥ ४ ॥
स्वाधारगं कुण्डलितं तु मूलं विद्युत्स्वरूपं बिसतन्तुसूक्ष्मम् ॥
व्यामार्द्धमात्रं तत एव भौमं बलं शिरोऽन्ते क्रमते शरीरे ॥ ५ ॥
योगादृते नास्ति तु कुण्डलिन्याः संचार ऊर्ध्वं हि तथापि तस्याः ॥
उद्भूय सूर्यांशुपदं शनैरस्मिन् देहे शिरोऽन्तेऽस्ति स देहपाल ॥ ६ ॥
यावन्त एतेह शरीरयष्टौ शारीरका धातव उल्लसन्ति ॥
ते मूलमालम्ब्य समे स्थिताः स्युर्नाशं लभेरन् यदि मूलनाशः ॥ ७ ॥
सौरो रसो यः स शिवः प्रसिद्धो मस्तिष्कमेतस्य परा प्रतिष्ठा ॥
मस्तिष्कमाहुस्तु सहस्रपत्रं तदन्तरे ज्ञानमयः शिवात्मा ॥ = ॥
योगादृते नैव शिवो विचाली तस्यांशवः सर्वशरीरयष्टौ ॥
व्याप्ता अपि स्नायुभिरेव तेभ्यो ज्ञानं तनौ पादतलान्तमस्ति ॥ ९ ॥
अन्ये तु मूलस्य शिवस्य च स्वस्थानस्थितस्यैव विसारमाहुः ॥
वर्तिस्थदीपस्य यथार्चिरेवं देहे स्वदेशमिमे क्रमेते ॥ १० ॥
पृथ्वीरसः प्राक् प्रपदात् प्रविश्यते स ब्रह्मग्रन्थेर्हृदयान्तमास्थितः ॥
केशान्तमार्गाद् द्युरसः प्रविश्यते स ब्रह्मरन्ध्राद् हृदयान्तमास्थितः ॥११॥
प्रपद्य देहं प्रपदद्वयेनोदसर्पदूर्ध्वं भगवत्समूरू ॥
अथोदरं तत् तदुरोऽभवच्च क्रमादुपब्रह्म तदित्यमासीत् ॥ १२ ॥
तस्मोदरं ब्रह्म तु शार्कराक्ष्या उपासतेऽथारुण्यो हृदेतत् ॥
ब्रह्मैव मन्ये हृदयोदरेऽन्ते स्थितेनेह वेनेण्व्याखिलं शरीरम् ॥ १३ ॥
यद्वा रसोऽस्या प्रपदाच्छरीरे प्रविश्य मूर्द्धानमुपैति सद्यः ॥
सोऽर्वाक् क्रमात् संभरणं प्रकुर्वन् संवत्सरेण प्रपदे स्थितः स्यात् ॥ १४ ॥
ततः शिशुः प्राग् बलमेति शीर्ष्णा कट्यां बलेनोपविशत्यथायम् ॥
कालेन पादे बलमेव लब्ध्वा प्रेत्याय भूयश्चरतीति केचित् ॥ १५ ॥
इरम्भरेद्भरस शरीरं हीणमयं तेन हिरण्मयं तत् ॥
भूगर्भतोऽग्निः प्रतिपद्य तस्मिन् संवत्सरेण प्रतितिष्ठतीह ॥ १६ ॥

अथो रविः शीर्षकपालमध्ये केशान्तरन्ध्रे वपुरूर्ध्वसीम्नि ॥
प्रविश्य तालुस्तनमेत्य भौमप्राणेन योगं हृदयेऽभ्युपैति ॥ १७ ॥
सोमात्मनः पोडशभिस्तु वर्षैर्लब्ध्वा कला पोडश पोडशि स्यात् ॥
तथा च पूर्णे मनसि प्रतिष्ठामुपैति सूर्योऽपि स पोडशाब्दैः ॥ १८ ॥
आभ्यां तृतीयोऽस्ति च हंस आत्मा हृत्पद्ममेतस्य परा प्रतिष्ठा ॥
तदन्तरे यद्दहरं वियत् तद्धामास्ति हंसस्य परं त्रिधातुः ॥ १६ ॥
यथाग्र मूलं स यथा शिवोऽयं तथैव हंसोऽपि सहास्त आत्मा ॥
मूलं शिवो हंस इति त्रयस्ते त्रैलोक्यनाथाः सह वेक आत्मा ॥ २० ॥
आदाय चादाय दिवः पृथिव्या रसानयं मिश्रयते मिथस्तान् ॥
न्यूनातिरेकोपगमात् पृथक्त्वस् स देहधातून् विदधाति हंसः ॥ २१ ॥
त्वग्रक्तमांसानि वपादिमेदोऽस्थिमज्जशुक्राणि च भूरसात्स्युः ॥
नाडीशिरस्नायव एव शाखा संहननवर्णश्च दिवोरसात् स्यु ॥ २२ ॥
दशेन्द्रियार्थेन्द्रियशक्तिमूलं मस्तिष्कपिण्डश्च दिवोरस म् स्युः ॥
तदिन्द्रियाद्यायतनानि भूतोत्थानि सर्वाणि भुवो रसात् स्यु ॥ २३ ॥
यावत्य एवेह शरीरयष्टौ चेष्टाः क्रिया याश्च वरं च किञ्चित् ॥
हंसस्य चायत्तमिदं समग्रं हंसे गते सर्वमिदं गतं स्यात् ॥ २४ ॥
एषां त्रयाणामपि तत्र तत्रैतस्मिन् शरीरे स्थितिहेतवः स्युः ॥
त्रयस्त एवेह सहोदितानामेकव्यपाये नियतं व्यपैति ॥ २५ ॥
तत्रापि हंसः प्रथमः प्रधानं मूलं तदन्वक् स शिरस्तदन्वक् ॥
हंसस्तु मातुर्जठराग्निनायं कृतं हृदाकारमनूदितः स्यात् ॥ २६ ॥
त्रीनप्यमूनेव विशिष्य देवास्त्रैलोक्यनाथान् प्रतिपादयन्ति ॥
सर्वेऽपि वेदा अत एवमन्ये कश्चिन्महर्षिं कश्चिदेवमाह ॥ २७ ॥
ये अर्वाङ् उत वा पुराणे वेद विद्वांसमभितो वदन्ति ॥
आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसम् ॥ २८ ॥

## अपानः व्यानः प्राण इति—पवित्रात्मतन्त्रम्

अथो पवित्रं प्रतिपादयामस्तथेह देहे पवते वहिर्वत् ॥
यावत् पवित्रं पवतेऽत्र तावत् पूयत मूत्रमलामयाद्यः ॥ १ ॥
यथा सुपक्वे कच पिप्पले रसोऽनुरक्त आभाति सुचर्मकोमले ॥
तथाग्निपाकेन रसोऽसृगस्त्यसौ चिरं स्थिरो येन पवित्रमस्ति तत् ॥२॥
आदित्यतः प्राण उदेति वायुर्भवत्पान पृथिवीरसेन ॥
तयोस्तु योगो हृदि यत्र तत्र व्यानोऽन्तरिक्षात् स्वयमभ्युपैति ॥ ३ ॥
प्राण स उत्क्रामति यो हृदूर्ध्वं योऽवाङ् इद् क्रामति सोऽस्त्यपानः ॥
एतौ गृहीतौ खलु येन सन्धिर्व्यानः स सन्धायक एतयोः सः ॥ ४ ॥
नाड्य शतं स्यु प्रतिनाडि ताः शतं पुनः सहस्राणि भवन्ति तास्वपि ॥
द्वासप्ततिस्तेन भवन्ति कोटयो द्वासप्ततिर्व्यान इहावतिष्ठते ॥ ५ ॥
न प्राणतो वायमपानतो वा जीवेद् यदि व्यान इहैव न स्यात् ॥
प्राणोऽप्यपानोऽप्यमुनेव योगात् स्तब्धो रसानेति दिवो भुवश्च ॥ ६ ॥

अयं पवित्रं पचतेऽत्र यो यं स पक्वयेद्वै पचने पवित्र्यां ॥
अन्तःप्रविष्ट पुरुषे तु स प्राङ् प्रत्यङ् च तस्माद् भवतः पुनर्द्वौ ॥ ७ ॥

का० प्र० प्रा० फं०
(शत० १।१।२।२)
" १।७।१।१२

य एति सूर्य्यं हृदयान्तमेष प्राणः प्रयन् सूर्य्यमुदान एषः ॥

शत. १।३।३।५

पीताशितं यो गिलतीह येनोच्चरत्ययं प्राण उदानवृत्तिः ॥ ८ ॥
य एति भूमेर्हृदयान्तमेतं समानमाहुर्भुवमन्यपानः ॥
बहिःस्थविष्ठं तद्रणिमघ्नं भुक्तस्य धातुं कुरुते समानः ॥ ९ ॥
प्राणोऽप्युदानो रविरश्मिवृत्ती अग्नेरपानश्च समान एषः ॥
व्याने तयोर्यावदियं धृतिः स्यात् प्राणेन विष्वग्धमिदं च तावत् ॥ १० ॥
मैत्रिश्रुतानित्थमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
अपानतोऽन्नं ध्रियते शरीरे त्विन्वैतरेयो भगवाननुवाच ॥ ११ ॥
प्राणस्त्वपानो भवतीन सोऽङ्गुल्यग्रेभ्य आसं चरन्निह तद्वत् ॥
विपर्ययात् प्राणमयस्तु सोऽङ्गुल्यग्रेभ्य आसं चरति ह्यपानः ॥ १२ ॥
तौ संहितौ तौ भवतश्च संततौ व्यानोऽप्युदानोऽपि तथैव पर्ययात् ॥
सुसहितौ संभवतश्च संततावित्याह चित्यामिह याज्ञवल्क्यकः ॥ १३ ॥
प्राणोऽस्त्युपांशुग्रह एवमन्तर्यामग्रहोऽपान इमौ तृतीयम् ॥
व्यानं तु नोपांशु सयं जहीतः सोऽभिहोपांशु सवनेऽत्र सोमः ॥ १४ ॥
परामघत्येव उपांशुरन्तर्यामं तथा तं स विपर्ययेण ॥
परस्परामद्दनतोऽन्तरात् तावोप्ययं सुगाते स शरीरगोऽग्निः ॥ १५ ॥

## वैश्वानरः तैजस प्राज्ञः इति–प्रत्युत्पन्नात्मतन्त्रम्

यः प्रक्रमोऽयो यत एव देहे भातीहिरण्यात्मान इहोदयन्ते ॥
सचेतनाचेतनयोर्यथा यतस्तमत्र प्रतिपादयामि ॥ १ ॥
अचेतने वाऽङ्कुरचेतने वा सचेतने वा निखिलेऽपि सर्गे ॥
पृथ्वीरसेन द्युरसोऽनुगम्य त्वात्मानमेकं सृजति द्वियोगात् ॥ २ ॥
द्यावापृथिव्योरसयोस्तु योगे पात्रं रसोऽस्याद्युरसो निधेयः ॥
द्वियो रसे पात्रमिते स आत्मा वैश्वानरप्राण उदेति देही ॥ ३ ॥
पृथ्वी तु विश्वं पृथिवी रसो नरो द्यौर्विश्वमेवं द्युरसो नरः परः ॥
विश्वानराख्यामितरेतरान्वयादभूत् स वैश्वानर उच्यते ततः ॥ ४ ॥
अथान्तरिक्षेऽपि रसोऽत्र वायुः पात्रे द्वितीयं भुवि संनिधत्ते ॥
भूगात्रतश्चेद् द्युरसोऽधिकः स्यात् स तैजसः स्यात् परपात्रमात्रः ॥ ५ ॥
ततोऽपि यत्र द्युरसोऽधिकः स्यात् प्राज्ञः स इन्द्रो ध्रियतेऽन्य आत्मा ॥
इत्थं त्रिधात्मा दैव त्रिभिः स संज्ञा द्वाभ्यां इमा धातव एकतः स्युः ॥ ६ ॥
तेजो रविप्राणरसः स वर्द्धते स वर्द्धितस्तैजस उच्यते ततः ॥

प्रज्ञा रवेरेव मनोरसः स च प्रवर्द्धते प्राज्ञमिमं ततो विदुः ॥ ७ ॥
दिवो रसे भूरसवच्च संहितान्येकत्रवाक् प्राणमनांसि चक्षते ॥
स्वजातिसंसर्गवशात् त्रयोऽप्यमी वैश्वानराद्याः स्युरिदं मतं परम् ॥८॥
वैश्वानरः पार्थिव एव दिव्यः प्राज्ञस्तथा तैजस आन्तरीक्ष्यः ॥
त्रैलोक्यसंभूतविमिश्रपानप्रमाणतस्ते त्रय उद्भवन्ति ॥ ९ ॥
दिव्यं मनः प्राण इहान्तरीक्ष्यो वाक् पार्थिवी तित्तिरिभिर्निरूचे ॥
तेषां च संयोगवशादिमेस्युस्तस्मात् तथैतेऽत्र मतान्तरेपि ॥ १० ॥
वैश्वानरोऽसौ पुरुषः शरीरं व्याप्नोति चालोमनखाग्रदेशम् ॥
अनाहतः शब्द इहास्य घोषो विपच्यते तेन च भुक्तमन्नम् ॥ ११ ॥
मैत्रिश्रुताविरथमुवाच शाकायन्यो महर्षिर्मरुते नृपाय ॥
आदित्यतो जायत एष वैश्वानरस्तथोवाच च शाकपूणिः ॥ १२ ॥
विश्वसमानोऽग्निरिवान्नमाहृतं पचेत्ततोऽस्मिन् प्रतिधीयते पुनः ॥
विस्रंसितो भौमरस स दिव्यतो रसात् समायुज्य परोऽग्निरुद्भवेत् १३
तथैव देहेपि यदन्नमाहितं वैश्वानरस्य प्रतिधीयते ततः ॥
विस्रंसितो भौमरसः स दिव्यत संयुज्य वैश्वानर एव जायते ॥ १४ ॥
सहस्रशीर्षा स सहस्रनेत्र सहस्रपादः पुरुषोऽयमग्निः ॥
वैश्वानरो व्याप्य वपुःसमन्तात् प्रादेशमात्रेण पृथक् पृथक् स्यात्॥१५॥
वैश्वानरं चाश्वपतिर्नृपः प्राक् ताण्ड्यश्रुतेस्तूपनिषद्युवाच ॥
तं याज्ञवल्क्यो दशमेतु काण्डेऽध्याये च षष्ठेऽचकथत् तथैव ॥ १६ ॥

१६। १०। ६।

य इमत्रयेऽप्यत्र दिवो रसास्ते स्युस्तारतम्येन युतानि सर्गात् ॥
तत्तारतम्यात् प्रतिकक्षमेषा नाना विभागा बहुधा भवन्ति ॥ १७ ॥
काचाभ्रमुक्ताफलवज्रनीलमाणिक्यगारुत्मतपुष्परागाः ॥
अयश्च शुल्वं रजतं हिरण्यं ताम्राश्मयोऽचेतनवर्गगा स्युः ॥ १८ ॥
इतश्चामृतयोऽप्युलपाः क्षुपा या तृणौषधी वृक्षगणा द्वितीये ॥
आरोहिणोऽस्फुटचेतानास्ते वैश्वानरस्तैजस एषु चात्मा ॥ १९ ॥
अथो तृतीये कृमयस्त्वपादाभूलग्नमापुच्छमुखं तदङ्गम् ॥
स्थानं त्यजन्त्येव चलन्त्य एता इदं न भूम्या अगदद् गृहीता ॥ २० ॥
यथा यथैषां घुरसा निवृद्धास्तथैषु भूकर्षबलं ह्रसत् स्यात् ॥
ऊर्ध्वं भुवस्तिष्ठति देहमत्र स्वस्मा इवापुच्छमुखं तु पादाः ॥ २१ ॥
ततोपि वृद्धे घुरसे लघुत्वान्मध्ये तनोः स्युर्बहवस्तु पादाः ॥
अष्टापदाः षट्पदपक्षिणः स्युश्चतुष्पदाः पक्षिगणा द्विपादः ॥ २२ ॥
पृथ्वीविलग्नं तु शिरः क्रिमेः क्रमादूर्ध्वं भुवः कीटशिरोवतिष्ठते ॥
पशोः शिरः पुच्छसमं पतत्त्रिणां पुच्छाच्छिर साधु तिरः समुन्नतम् ॥२३॥
पशुर्मनुष्योऽस्ति तथापि तच्छिरो घत्ते विशिष्य घुरसं ततः सदा ॥
विरुद्धदिक्स्थं भवति क्षितेरिदं घुसंमुखं तस्य न पुच्छमुन्नतम् ॥ २४ ॥
इन्द्रातिशय्याच्च मनुष्यवागियं विज्ञानसंपन्नतमाऽक्षरान्विता ॥
विद्या च वैज्ञानिक एव वेदयन् शास्त्रं हि निर्माति परोक्षमीक्षते ॥ २५ ॥

ततोऽपि वृद्धे वपुरसे लघुत्वादस्कम्भपादा वहयोऽन्तरिक्षे ॥
जीवाः परे देवनिकायसंज्ञा अभूतलस्पृष्टपदा वसन्ति ॥ २६ ॥
ते चावरे द्वादशयोजनान्ताः परिस्रवे चन्द्रमसः परे स्युः ॥
परे रविज्योतिषि ये तु सूर्ये तान् ब्रह्मसंज्ञान् परमान् वदन्ति ॥ २७ ॥
कृमिं समारभ्य नरान्तजीवे क्रमेण बुद्धीन्द्रियशक्तिवृद्धिः ॥
नरे स्युरेकादश चेन्द्रियाणि ज्ञानक्रियाशक्तिविशेषकाणि ॥ २८ ॥
देवेषु तेभ्योऽप्यधिकास्तु शक्तयः प्रादुर्भवेयुः सहजाः स्वभावतः ॥
ता अष्टसिद्धीर्नव तुष्टिसंहिताः शक्तीः पुराणाः कपिलादयो विदुः ॥२९॥
देवा इमे यद्यपि सन्त्यदृश्यास्तथापि नो सन्ति न तेऽन्तरिक्षे ।
चिरादिहाद्यावधि नूनमेषां क्वचित् क्वचित् प्रत्ययमावहन्ति ॥ ३० ॥
पुरायुगे काश्यपमहर्षिकन्या, बभूव गन्धर्वधृता हि मार्गी ॥
बालापि विज्ञानविशिष्टमर्थं, प्रोवाच साऽऽविष्टपरात्मयोगात् ॥ ३१ ॥
अद्यापि कुत्रापि नितान्तबालो बालाप्ययोग्या, बहुशः प्रवक्ति ॥
वैज्ञानिकं चाप्यतदर्हमन्यं चार्थं क्वचित् तत्परमं प्रमाणम् ॥ ३२ ॥
सन्त्यम्बुबिन्दौ शतशस्तु कीटाः सन्त्यग्निहेतावपि कीटसंघाः ॥
साधारणा न प्रतियन्ति तांस्तान् वैज्ञानिकाः किन्तु विलोकयन्ति ॥ ३३ ॥
तथैव देवा अपि सन्त्यदृश्याः परीक्षया ते बहुशोऽनुभूताः ॥
ये तत्र न प्रत्ययमावहन्ति बाला हि ते ज्ञानकलास्वयोग्याः ॥ ३४ ॥
सिद्धर्षयस्ते कपिलादयः स्वे सांख्ये विदुः सत्त्वविशालसर्गान् ॥
अष्टप्रकारानपि चन्द्रलोकाधस्तात् परस्ताच्च सतुष्टिसिद्धीन् ॥ ३५ ॥
बहुश्रुतोऽसौ चरकश्च देहेऽन्यस्यात्मनोऽन्यस्य गतिं विवष्टे ॥
ग्रहांश्च तानाहुरिमे यथार्थं ब्रुवन्ति तत्तत्त्वमत प्रतीयात् ॥ ३६ ॥
स्तम्बादयो ब्रह्मपरा य एते शरीरिणो जन्ममृती भजन्ते ॥
ऊर्ध्वाधराः कर्मवशादमीषां विपर्य्यया योनिगतौ मिथः स्युः ॥ ३७ ॥
द्यावापृथिव्यो रसयोस्तु बन्धादात्मान आमोक्षमिमे स्थिराः स्युः ॥
ते च प्रविष्टा मृतिजन्मचक्रे भवन्ति नानाविधयोनिभुक्ताः ॥ ३८ ॥
पृथ्वी च सा द्यौश्च यतोऽग्निरग्निस्तस्मादिमे द्वे अहनी तथापि ॥
कृष्णा मही रात्रिरहः सिता द्यौः सर्वोऽप्यहोरात्रगतस्ततोऽभूत् ॥ ३९ ॥

## अन्नम्, ऊर्क्, प्राण–इति यज्ञात्मतन्त्रम्

प्रत्यर्थमौष्ण्यं परितोऽनुभूयते तस्माद् ध्रुवं तेष्वखिलेषु तेऽग्नयः ॥
नाग्निर्विनाघातमतोऽनुमीयते लोष्टेऽपि लोकद्वयतो रसौ चितौ ॥ १ ॥
औष्ण्यं हि वैश्वानरतोऽस्ति देहे वैश्वानरो यज्ञमयः स यज्ञः ॥
अस्त्यग्निसोमान्वयरूप इत्थं प्रत्यर्थमन्नादकृतोऽत्र भोगः ॥ २ ॥
न प्राणनिःश्वसनमस्ति यस्मिन् नान्नप्रदायास्य कदापि कामः ॥
अनाहुतेऽन्ने तु न यज्ञसिद्धिर्यज्ञं विना नाग्निरयं न चौष्ण्यम् ॥ ३ ॥
प्राणादपानाच्च मिथोऽनुघर्षाद्वैश्वानरोऽग्निर्भवतीह देही ॥
वैश्वानरो यज्ञ इहोपसन्ना देवा युतास्तैजसवायुरुक्थः ॥ ४ ॥

स तैजसो वायुरयं प्रपुष्टो मध्ये दधातीन्द्रमिदं दशं यत् ॥
प्राज्ञं तमाहुस्तत एव देहे चैतन्यमायाति स एष आत्मा ॥ ५ ॥
स वाङ्मयः प्राणमयो मनोमयो वैश्वानरस्तैजस इन्द्र एष यः ॥
त्रयः स आत्माऽव्यतिरिक्त एकक स च द्विधा व्यष्टिसमष्टिभेदतः ॥ ६ ॥
विस्रंसते प्राण इह स्वभावतः प्राणे गते क्लिश्यति तत्सितं मनः ॥
प्राणं पुनः स्रष्टुमिदं तु वाङ्मय पीताशितं कामयतेऽत्र माहृतम् ॥ ७ ॥
प्राणो द्विधा व्याप्रियते स केनचिद्भागेन विस्रस्य परेण युज्यते ॥
अन्नं समाहारयते तु केनचिद्भागेन सोऽन्नं परिगृह्य तिष्ठति ॥ ८ ॥
गृहीतमन्नं द्विविधं प्रवर्तते प्राणस्तु दुग्धादिवसंमितं भवेत् ॥
प्राणं तु विस्रस्तमनेन पूरयेद् भूयोऽत्र चास्मिन् जनयेद् विशेषिताम् ॥ ९ ॥
अन्नं भवेद्दुर्गन्धिमूर्च्छ तु सद्यः प्राणो भवेत् प्राण इहेतरे द्वे ॥
ऊर्ध्वं चेतरे अन्नमपीतरौ द्वौ धत्ते मिथः संग्रह एष यज्ञः ॥ १० ॥
वैश्वानरेऽन्यः स च तैजसेऽन्यः प्राज्ञे च सोऽन्यः, स च चित्यतेऽन्य ॥
चिते निधेयेऽन्य इहाहुते स्यान्न सोऽस्ति यो यज्ञ इहैव न स्यात् ॥ ११ ॥
वैशेषिकात्माथ पवित्रमात्मा संजीवनात्मा स च यज्ञ एतान् ॥
छन्दांसि मन्ये वयसां चरत्स्वच्छन्दः स्थिरं यज्ञ इहैव न स्यात् ॥ १२ ॥

## अग्निवायुरिन्द्र इति—साधारणात्मतन्त्रम्

आत्मद्वयाधातवशादपूर्वास्त्रयो य आत्मा न इहोद्भवन्ति ॥
वैश्वानराद्याः प्रतिदेहमेते भिन्नाः शरीरेण सहापियन्ति ॥ १ ॥
ते चाग्निवाय्विन्द्रमयाः शरीरं गृह्णन्ति चालोमनखाग्रदेशम् ॥
सत्याग्निवाय्विन्द्रकलास्ततोऽन्याः साधारणाः काश्चिदिहेति मन्ये ॥ २ ॥
आकर्षिता येन बलेन पृथ्व्यामृताकृषणिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं रूपं समन्ताद्यतु कृतभागे ॥ ३ ॥
आकर्षिता येन बलेन तूर्ध्वं धूमाग्निदेहेनिप्रमुखाः स्युरर्थाः ॥
तदत्र साधारणमस्ति भिन्नं समं समन्तान्न सहस्रपत्र ॥ ४ ॥
बले हिते सौरबलप्रसङ्गादुत्तिष्ठते सूर्यमभीदमङ्गम् ॥
आकृष्यते भौमबलात्तु वर्ष्म प्रसह्य पृथ्वीमनुभौतिकं यत् ॥ ५ ॥
देहे गुरुत्वं पृथिवीरसादिदं लघुत्वमस्मिन् द्युरसात्प्रजायते ॥
उत्थाय देहं भुवि यत्र तत्र यत्संचारयत्येष च तद्दिवो रसात् ॥ ६ ॥
मृतस्य देहेऽधिकमस्ति गौरवं तद्वास्तवं गौरवमस्ति दैहिकम् ॥
दिव्याद् रसाद् यल्लघुतोपपद्यते जीवत्यतः सा गुरुता कनीयसी ॥ ७ ॥
स्थितो यदिच्छन् स्वकरं पदं वा स्तब्धं दिवि स्थापयति प्रसह्य ॥
तदप्यमुष्मिन् द्युबलेन सिद्धं नाडीशरीराकृतिरप्यमुष्मात् ॥ ८ ॥
यत्तूच्छ्वसन् द्राक् पतति क्षितावयं नेच्छन्नपि ध्यायममूर्ध्वमूर्च्छति ॥
देहं च मृत्यावपि नान्यलोकगं यदस्य तद्भूमिरसात् प्रसिद्ध्यति ॥ ९ ॥
भुक्तं यदन्नं परिपच्यते ततो भूत्वा रसः कृत्स्नशरीरमश्नुते ॥

मलं त्वपर्कं वहिरेव भुक्तगात् तथापि-तावेव रसौ प्रयोजकौ ॥ १०
इत्थं पृथिव्यांद्य दिवश्च मात्रया जीवोऽमुतश्च इति प्रवेदयन् ॥
गां मातरं द्यां पितरं प्रवीम्यहं कोऽहमस्मि मातुः पितुरप्यपालितः ॥११॥

## इति द्यावापृथिव्यधिकारः ॥

## ऋतसत्याधिकारः ( आर्तवाधिकारः )

१ स्नेहोऽस्ति रात्रिस्त्वहरस्ति तेजः कौर्यतादिः प्रथयति सर्वमाभ्याम् ॥
व्याप्तं तयोः स्निग्धमृतं तु तेजः सत्यं तु नाभ्यां परमस्ति किञ्चित् ॥ १ ॥
यत्राशनाया प्रथमास्ति वस्यान्योन्यं समन्वेतुमणु वर्तेते ॥
स्नेहः स्मृतो यद्गुणविशानाद् यत्राभिसरणान्ययि तद्धितेजः ॥ २ ॥
२ ऋते च सत्ये च भवस्य नेत्रे ऋतं भृगुः सत्यमिहाङ्गिरास्तु ॥
सोमश्च वायुश्च तथाऽऽप एते स्निग्धा अनुष्णाभृगवोऽमृतरथाः ॥ ३ ॥
यमोऽग्निरादित्य इति त्रयस्ते तेजोमया अङ्गिरसश्च सत्याः ॥
भृग्वङ्गिरोभ्यामिदमास्ति विश्वं व्याप्तं त्वहोरात्रमिदं प्रविधात् ॥ ४ ॥

| सोमःवायुः आपःअग्नि यम आदि | १ ऋतम्=भृगुः २सत्यम्=अङ्गिराः | १ ऋतम्=स्नेहः २सत्यम्=तेजः | १ ऋतम्=२ सूर्यरसः २सत्यम्=१ वरुणपृथ्वी चन्द्ररसाः | १ ऋतम्=सोमः २सत्यम्=अग्नि. | १ ऋतम्= चन्द्रः २सत्यम्= सूर्यः |
|---|---|---|---|---|---|

ऋतं सत्यमृते सत्यमिति । अयंवा अग्निरृतम् असावादित्यः सत्यम् । यदिवा—असावृतम्, अयं सत्यम् । उभय येतदयमग्निः तस्मादाह-ऋतं सत्यमृते सत्यमिति ॥ ( शत. ६।४।४।१० ) ॥ "ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन ॥ ऋते समुद्र आहित ऋते भूमिरियं श्रिताः—॥" ( तै. ब्रा. कां. १ प्र. ५ अ. ५ ) ॥ ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति ॥ सत्यं त्वर्तेन परिषिञ्चामीति प्रातः ॥ अग्निर्वा ऋतम् । असावादित्यः सत्यम् ॥ अग्निमेव तदादित्येन सायं परिषिञ्चति । अग्निनाऽऽदित्यं प्रातः ॥ ( तै. ब्रा., २। ,१। ११ ) ॥ ऋताग्निमग्निशब्देनैव प्रायेणाचक्षते । सत्याग्निं त्विन्द्रशब्देन ॥ "आग्नेयी च रात्रिः, ऐन्द्रमहः"—इत्यग्निहोत्रे तैत्तिरीयोक्तेः ( तै. ब्रा. २। १। २ )

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आववृत्रन् सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥ ( ऋ. सं. ) ॥ पृथिवी व्युन्दुः"—इत्याथर्वणसंहितायां पाठः । ( ६। २। २२। १ ) ॥ अनया ऋचा ऋतस्योत्तरदिगवस्थाने गम्यते । दक्षिणायनोपक्रमे वृष्ट्युपक्रमदर्शनात् । "यदा खलु वा असावादित्योऽर्वाङ् रश्मिभिः पर्यावर्तते ऽथ वर्षति" । इति श्रुतेश्च ॥

सायणभाष्ये ( १ अ. २ खं. ३ सू. ) "ऋतस्य सदने सीदामि, ऋतपात्रमसि"—इति मन्त्रयोर्ऋतशब्दः सोमार्थः । द्रोणकलशस्य, सोमभाण्डस्य ऋतपात्रत्वेनाभिधानात् । तेन सोमसंभृता वाग्-ऋतम् । अग्निसंभृता वाक्सत्यम् । वाचः सर्वत्र व्याप्तया आकाशसंज्ञा । तत्राप्युष्णा सासंस्तुता सत्यं नाम । वस्तुन्यग्निरूपाणि । वस्तुसत्तया वाक्पदे सत्यं नाम । तदृते ऋतमिति । अन्यथाऽपि स्वभावतः सोमस्याग्निः । तद्ध्यनपदमिन्द्रापयुक्ते हितं शून्यम् । स्वनामेन्द्रः । ( ईश्वर ) सर्वाकाशव्यापी । अग्नीषोमाः सोमस्तारतम्यादुपपन्न ऋतुः । आपोऽप्यजसन्दमः । उत्तरादिग् ऋतसद्मम् सौम्यत्वात् ॥

प्राणो यदिस्नेहगुणः ससोमः स्थौल्यात् सवायुः पुनराप एताः ।
तेजो गुणोऽग्निर्द्विध वाक् स इन्द्रः स्थौल्याद् यमोऽग्निः पृथिवीयमग्निः ॥५॥
१ प्राणः १ वाक्—२ वायुः २ तेजः—३ आप ३ पृथ्वी ।
पृथ्वी जलं तेज उतैप वायुश्चाकाशसोमाविति भूतवर्ग ॥
व्यासक्तरूपाणि तदित्थमेतान्यृतानि सत्यानि जगत्स्वरूपम् ॥ ६ ॥
दिव्योऽग्निरिन्द्रस्तत एव पूर्णं सत्यं ततो रिक्तमृतं प्रतीयात् ॥
यत्रास्ति सूर्यस्य रसः स सत्यस्ततोऽतिरेकादृतमेव सर्वम् ॥ ७ ॥
यद्वारुणं चान्द्रमिदं च भौमं तन्मण्डलं सर्वमृतं यद्वामः ॥
ऋतं निशा भौमरसाऽथ सोमादुदक् प्रतीची वरुणाद् ऋतं स्यात् ॥ ८ ॥
आपश्च सोमोऽग्निरयं च सोमः सर्वेऽप्ययमी नूनमृते वसन्ति ॥
रसश्च सौरस्य निधानमस्मिन्नृते न सत्यैरवृतमाहितं स्यात् ॥ ९ ॥
४ न चास्ति तद्धाम न यत्र सोमस्ततं हि सोमेन समन्ततः खम् ॥
- तद्धाम साधारणमस्ति तस्मिन् क्वचित्क्वचिन्मण्डलमस्ति चाग्ने ॥ १० ॥
अग्निर्यदृहन्मण्डलमल्पकं वा यावत्तनोतीह तदस्ति सत्यम् ॥
ऋते तु तन्मण्डलतोऽग्निरिक्तं यद्धाम तत्सर्वमृतं प्रतीयात् ॥ ११ ॥
देवा इदं विश्वमभीभिरेव प्रन्थी भवद्भिर्हि मिथोऽनुबन्धात् ॥
पिण्डा अभूवन्निखिलास्त एते देवाश्च सोमाग्निभिदा द्विधा स्युः ॥ १२ ॥
ये वा यवो याः पुनराप एते सोमाश्च भूतानि च सोम एव ॥
-- यमोऽग्निरादित्य इति त्रयोपि स्युरग्निभेदा न परोऽस्त्यमीभ्यः ॥ १३ ॥
सोमप्रभेदा इह चन्द्रलभ्याश्चन्द्रो हि तत्संग्रहरूपपिण्डः ॥
अग्निप्रभेदास्त्विह सूर्य्यलभ्याः सूर्यो हि तेषामुपसंग्रहोऽस्ति ॥ १४ ॥
८ अग्निर्द्विधा यः प्रलयावधिः स्यात् संवत्सरः सौर इहैव सत्यः ॥
ऋतस्तु संवत्सर एव भौमः सोमाद् विशेषाकृतिभाग् ऋतुः सः ॥ १५ ॥
यः पार्थिवोऽग्निस्तमृतं प्रतीयादादित्यमग्निं तु वदन्ति सत्यम् ॥
असावयं चाग्निरियैकरूपस्तस्माद् ऋतं सत्यमभिन्नमाहुः ॥ १६ ॥
अथापि वा पार्थिव एवसोऽग्निर्द्विधास्ति सूर्य्याग्नियुतः स सत्यः ॥
सोमान्वयादन्तरितस्त्वृतः स्यादयाचि सत्योऽयमृतोऽस्त्ययुदीचि ॥ १७ ॥
रात्रिस्त्वृतं स्यादिह चन्द्रमूलं सत्यं त्वहः स्यादपि सूर्य्यमूलम् ॥
कृष्णं न शुक्लं तदनं च सत्यं रात्रिस्त्वहश्चेति ततोस्ति सृष्टिः ॥ १८ ॥
उभे अपीमे अहनी भवेतामहश्च कृष्णं ह्यहरर्जुनं च ॥
पठन्ति कृष्णोऽहनि रात्रिशब्दं न कालमात्रे तु तयोः प्रयोग ॥ १९ ॥
६ *मूर्तस्तु कालो द्विविधोऽग्निसोमप्रभेदतस्तावपि शुक्लकृष्णौ ॥
-योऽग्निः स शुक्लस्त्वदहः प्रतीयात् सोमस्तु कृष्णः स हि रात्रिशब्दः ॥ १ ॥

---

*अहोरात्रे वा अग्नीषोमौ । तमाहुर्विल्प- स्याच्छुक्लं च कृष्णं चाहोरात्रयोरूपेण । ( कौ- १०। ३ ) ॥

केऽपि नवीना इदमित्थमाहुस्तावग्निसोमावपि सूर्यचन्द्रौ ॥
सूर्योऽग्निरूपो भुवनं विचष्टे सौम्यो विधिश्चन्द्र ऋतुं तनोति ॥ २ ॥
*पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् ॥
विश्वान्यन्यो भुवनाभिचष्ट ऋतूरन्यो विदधज्जायते पुनः ॥ ३ ॥
( मं १० सू. ८५ ऋ. १८ )

† नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ॥
भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायुः ॥ ४ ॥
ऋतोऽस्ति सोमः किल तत्र तत्र वृद्धिक्षयाभ्यां कुरुते विशेषात् ॥
ऋतोर्विभागा ऋतवः षडेते भवन्ति सोमान्वयतारतम्यात् ॥ ५ ॥
त्रयस्तु सोमक्षयतारतम्या वसन्तपूर्वा ऋतवो भवन्ति ॥
सोमप्रवृद्धिक्रमतस्त्रयोऽन्ये सौम्यर्तवस्ते शरदादयः स्युः ॥ ६ ॥
ऋतोर्विभेदा ऋतवः षडेते संवत्सरस्यावयवा भवन्ति ॥
संवत्सरौ पार्थिव चान्द्रभेदाद् द्वौ सौरसंवत्सरगौ तु तौ स्तः ॥ ७ ॥
‡ द्वे ते चक्रे ब्रह्माण ऋतुथा विदुः ॥
अथैकं चक्रं यद् गुहा तदद्धातय इद्विदुः ॥ ८ ॥ ( १० । ८५ । १६ )
अस्यामृचि प्रोक्तमिदं त्रिचक्रं संवत्सरात्मेति वदन्ति केचित् ॥

---

* पूर्वापरमिति । पूर्वं गच्छति सूर्यः तमनुचरति चन्द्रः । इत्थमेतावादित्यचन्द्रौ मायया स्वप्रज्ञानेन पौर्वापर्येण दिवि चरतः तौ शिशू इवान्तरिक्षे–विहरन्तौ यज्ञं प्रतिगच्छतः । तयोरेक आदित्यः सर्वाणि जन्यजातान्यभिपश्यति । अन्यश्चन्द्रमा वसन्तादीनृतून् कुर्वन् पुनः पुनर्जायते ॥ चन्द्रस्य ह्रासवृद्धिसद्भावात् तदपेक्षयैव पुनः पुनर्जायत इत्युक्तिः । तैत्तिरीयसंहितायामप्युक्तम् "चन्द्रमा वै जायते पुनः"–इति ।७।४।११। यद्यपि सूर्यस्य ऋतुजनकत्वं लोका मन्यन्ते तथापि सूर्यस्यैकरूप्यात् विशेषाद् ऋतुजनकत्वं नास्ति चन्द्रमास्तु ह्रासवृद्ध्यादिविशेषशाली स्वसंयोगवियोगाभ्यां सूर्याग्नी तारतम्येनातिरेकं सृजतीति तस्यैव ऋतुजनकत्वं वेद्यम् ॥ १ ॥

† नवो नव इति जायमानो वर्द्धमानः सन्नवो नवो भवतीति शुक्लपक्षाभिप्रायम् । अह्नां द्वादशानां तिथ्यंशानामुपलक्षकः सन् मासुषसामग्रं सामीप्यमायातीति कृष्णपक्षाभिप्रायम् ॥ एवं द्वाभ्यां गतिभ्यामागच्छन् गतिं समापयन् दर्शे च पूर्णमासे च देवेभ्यो भागं विदधाति । देवेभ्यो भागदानाच्च यजमानस्यायुः प्रतिरते प्रवर्द्धयति । अह्नां केतुरिति सूर्याभिप्रायं केचिद्योजयन्ति तद् भ्रान्तम् । सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चादिति श्रुत्या सूर्यस्योषः पृष्ठगतिप्रसिद्धेः । तस्माद्यं संपूर्णो मन्त्रश्चन्द्रपरो द्रष्टव्यः । पूर्वापरं नवो नव इति मन्त्रद्वयं सूर्यायाः सावित्र्या आर्षम् ॥ ८। ३। २३ ॥

‡ द्वे ते इति हे सूर्ये सावित्रि तव चन्द्रसूर्यात्मके द्वे चक्रे ऋतुषु विनिर्दिष्टे ब्राह्मणा जानन्ति । अथैकं तृतीयं संवत्सरात्मकं चक्रं गुहायां यन्निहितमस्ति तन्मेधाविन एव जानन्ति । तस्य दुर्ज्ञेयत्वाद् परोक्षत्वात् ॥ एतदपि सूर्याया आर्षम् ॥ मनोमयस्यानस इति ॥ "मनो अस्या अन आसीद् द्यौरासीदुतच्छदिः । शुक्रावनड्वाहावास्तां यदयात् सूर्यागृहम्"–इति सावित्र्योक्तेर्मनसः शकटत्वं सूर्यचन्द्रयो रथयोक्तृत्वं प्रकल्पितं वेदितव्यम् ॥

मनोमयस्यां न स एव वाऽन्यत् पृथक् त्रिचक्रं किमपीति चिन्त्यम् ॥९॥
भूमार्गचक्रं खलु दीर्घवृत्तं तत्र त्रीणि केन्द्राणि भवन्ति तस्मिन् ॥
द्वे तूपपन्ने इह मासषट्कान्मध्यं तृतीयं तु पृथग्वदूह्यम् ॥ १० ॥
एतत् त्रिकेन्द्रं भवति त्रिचक्रं यदाह सूर्या सवितुः सुतासौ ॥
त्रिचक्रसंवत्सरमेनमेव न्यरूपयद्दीर्घतमा महर्षिः ॥ ११ ॥
द्वादशप्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ॥
तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ १२ ॥
अंशाः स्थिरा अस्थिरतां भजन्ते वैषम्यतः प्रत्यहभूमिगत्याः ॥
वैज्ञानिकं चक्रमिदं न चाक्षा दृश्यं ततः प्राह मनोमयं तत् ॥ १३ ॥
ऋतून् पितॄनाहुरिमान् वसन्त ग्रीष्मादिकास्ते पितरो हि सौम्याः ॥
ऋतुप्रभावात् प्रकृतौ विकारा य आर्तवास्ते स हि सृष्टिकालः ॥ १४ ॥
अग्निर्यमो नाम परोऽस्ति कश्चित् सोऽग्नौ हि सोमान्वयरोधकः स्यात् ॥
सोमो यमासं निहिते शिवेऽग्नौ यावद्धुनत्यावदिहास्ति सृष्टिः ॥ १५ ॥
अग्निस्त्वहोरात्रमियं स सोमो यमस्तु सन्धिर्न दिनं न रात्रिः ॥
अग्नीद्धे सौम्यः सृजतीह विश्वं तस्मादहोरात्रजसृष्टिमाहुः ॥ १६ ॥
अध्यात्ममग्नौ यदि शोणितेऽस्मिन् सोमो हुतस्तत्परवीजरेतः ॥
चतुर्युताशीतिमितं तदस्मिन् सौम्यं सहस्तिष्ठति सप्तकोशम् ॥ १७ ॥
पिण्डं तमाहुः समुद्रः शरीरे भूत्वा मुहुस्तत्र विलीयते च ॥
स्यादोजसे स्यान्मनसे विलीनं क्षेत्रश यज्ञ्यास्तमदन्ति देवाः ॥ १८ ॥
यद्यूर्ध्वरेताः प्रभवेत् तदेदं विद्यादधोरेतसि पूयते वा ॥
सुतस्तु पत्न्यां स विजायते वा पित्र्योयमात्मा स्वयमस्ति पुत्रः ॥ १९ ॥
सोम्यांशुपिण्डे द्विविधा विभागाः स्युः सूनवोऽन्ये पितरस्ततोऽन्ये ॥
सपिण्डता सप्तसु पूरुषेष्वप्राक्षीत् पुरा दीर्घतमास्तमर्थम् ॥ २० ॥

* "पाकः पृच्छामि मनसाविजानन् देवानामेनानि हिता पदानि ॥
वत्से बष्कयेऽधि सप्त तन्तून् वि तत्निरे कवय ओतवा उ" ॥२१॥ ऋ. सं. मं. १ । सू. १६४

---

* पाकः पृच्छामीति । पाको विशुद्धहृदयो निर्दम्भः सन्नहं मनसा अविजानन् अतिगहनमिदं तत्त्वं विज्ञातुमशक्नुवन् पृच्छामि । संदेहास्पदानि इमानि देवानां पदानि निहितानि निगूढानि सन्ति । ततः पृच्छामि । एकहायने वत्से इवादित्ये अधिके तापमानात् सप्तसोमसंस्थान् यज्ञमानाः ओतवै तिर्यक् तन्तून् वेतुमिव वितन्वन्तिरम । यद्वा सप्तसोमसंस्थारूपान् निर्मथ्य तन्तुमन्तामाय ; सप्तच्छन्दांसि वितन्वन्निरमेति सायणोऽव्याचष्टे । अथ याज्ञिकसोमसंस्थानामादित्यपरतया व्याख्यानं नातीव रोचते । याज्ञिकस्य दीर्घतमसो यज्ञविज्ञाने पूर्णनैपुण्यात् तद्विषयप्रश्नासम्भवात् ॥ वत्सुनस्तु बष्कयशब्दस्तरुणवचनः । तादृश वापरयमजननायोग्यश्च । तादृशे वत्से संतानेऽधिकृत्य पित्र्यान् सप्तमन्तून् सप्तमहोभागान् सूत्ररूपेण रचयितुमुपरज्ञान् पुनरोतवै पुत्रपौत्रादिसप्तकसन्तननाय वितन्वन्तिरम इत्येव साधीयानर्थः प्रतिपत्तव्यः । अथवा प्राणिशरीरे निहितान्येनानि देवानामग्निसोमादीनां पदानि मनसा हृदयेनाऽविजानन् जानानः पाको बालकोऽहं कविभ्यः पृच्छामि । हे कवयः ! यदेताः पञ्चके तरुणव्यवस्थे वत्सेऽधिकृत्य प्रारभ्य सप्ततन्तून् मदामूयाथि । ओतवै—उ पुनरपि तन्तुमन्तनाय वितेनिरे । यद्वा वत्सयशो बष्कयशीर्घ्यादयः शब्दास्तरुणवत्सवाच-

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरतिदुर्गाणि विश्वा ॥
स्वां प्रजां बृहदुक्थो महित्वा वरेष्वदधादापरेषु" ॥ २६ ॥ ( १०। ५६। ७ );
एषां बलानां पितरश्च देवाश्चापीशते ते समचिन्वन्त्युश्च ॥
क्रतुं च देवेष्वदधुः पृथक्कृत्यानेमान् प्रमीताः प्रविशन्ति पश्चात् ॥ २७ ॥
लोकान् सहोभिर्निखिलानरन्ति पूर्वाणि धामान्यमितानि मात्वा ॥
यच्छन्ति तन्वा भुवनानि तानि प्रसारयन्ते बहुधा प्रजाश्च ॥ २८ ॥
ये स्वर्विदो येऽप्यथ राक्षसा इति द्वेधाऽसुराः स्वर्विदश्चन्द्रमाः ॥
मासैस्त सौम्याश्च आत्मनि मदादशेरते, विंशतिरष्ट चाह्निकाः ॥ २९ ॥

---

मन्त्रचतुष्टय व्याचष्टे न । १। १८॥ यथ तु मम । महिम्न इति । एषा देवाना महत्त्व पितरोऽपि समभ्यन्ते । पितरोऽपि देवत्व प्राप्ता सन्तीति वा देवत् पितरोऽपि कर्म कुर्वन्तीति वा यत्र देवा किञ्चित् कर्म कुर्युस्तत्र पितरोऽपि ससज्जन्ते इति वा तात्पर्यम् देवेष्वपि देवः तं प्रियां स्वीय यज्ञ निवेशयन्ति । सुत्या नामाहुतिर्यत्र या जुह्वति । यत्र कश्चिद्देव किञ्चित्कुरुते तत्रान्योऽपि देव समासज्य स्वयत्नेन किञ्चित्सह कुरुते । अत एव देवकर्मसु चेत्रशायास्त कर्मसु पितरोऽपि भागिनो भवन्ति । अथवा पितरोऽपि देवा इति कृत्वा पितर पितृभि संसज्य कर्म कुर्वन्तीत्यर्थं । यद्वा अग्न्यादिदेवेषु भौतिक सोमो हूयते स सुत्या यज्ञो भवति । किन्त्विह देवा एव देवरूपानेव सोममयान् पितॄन् स्वोशापितेऽग्नौ जुह्वति । न मनुष्या एव सोमं जुह्वति अपि तु देवा अपि देवेषु देवमय क्रतु जुह्वतीत्यर्थ । यानीति प्रकरणात् सह करोति । यानि महांसि पितॄणां समवेत्य तु परस्परेण सह सगम्य व्यक्तिमगच्छन् उत अपि चानयजीवनकालपर्यन्तम् यतिषु प्रदीप्यन्त प्रतिभासन्ते स्म । तानि वा अत्र केन चिरकालेन एतासेन पितृणा तनूषु सपिण्डीकरणवेलायां निविविशु सताना पितॄणां सहा स्येकत्रीभूय पुत्रपौत्रादितनुरूपेणाभिव्यक्तानि भूत्वा तन्मरणोत्तर तानि सह सि पुन इने ने पितृषु भागश प्रविशन्तीत्यर्थं । सम विव्यचुरिति वक्तव्ये काव्यदोषादनुस्वारपात ॥१९॥

सहोभिरिति । सह शब्द पुत्रपौत्रादिषु सूयमान पिण्डावयवद्रव्यमाह ॥ ..स शब्दो लोकवचन प्रकृते पुत्रपौत्रादिसत्तापत्यशरीराभिप्राय । पूर्वशब्द पुत्रादिषु पिण्डभागा-हुते पूर्वकालिकत्वं प्राह । धामशब्द पिण्डाभिप्राय । अमितानि व्यवच्छेदरहितानि । तनूष्विति तनुशब्देन सप्तषट्पञ्चचतुस्त्रिद्व्येकरूपा पितृसञ्ज्ञका पिण्डभागा विवक्षिता । भुवनशब्देन जायमाना सूनुसञ्ज्ञका पिण्डभागा गृह्यन्ते पुरुधेति बहुधार्थ । तेनायमर्थ । पत्नीशरीरे शुक्राहुते पूर्वकालिकानि सप्तषट्पञ्चादिव्यवच्छेदरहितानि पिण्डरूपाणि सप्त पञ्चादिव्यवच्छेदैर्व्यवच्छेदभग्न पितर सर्वं पुत्रपौत्रादि समापत्यशरीरं सहोभि वीर्यं परिचक्रमुः पर्यागमन् । तानि च भुवनानि पुत्रादिरूपेणोत्पद्यमानानि सूनुसञ्ज्ञकानि महांसि तनूषु पितृशरीरेषु सप्तपञ्चादिरूपेषु न्ययमयन् । तद्वियत्तान्यकुर्वन् । एकविंशतिसप्तकेन पञ्चदश पट्केनैव आतं आतं भाग योषिच्छरीरे पद् सन्धानमकुर्वन् ॥ अविच्छिन्नमूला येन तानि भुवनानि सूनुमहांसि प्रजा सप्तापत्यान्यनुप्रासारयन्त, तथ प्रसारणं नैकरूपम् अपितु कश्चिदधिकं कश्चिदल्पं कश्चिदल्पाल्पमिति विशेष द्विधासूनव इति । एकविंशत्यादि पिण्डभागे पुनर्जायमानाः पुत्रादय तृतीयेन कर्मणा पुत्रोत्पादनरूपेण स्वर्विदसुरं सौम्यमहोरूप द्विधा धारयाचक्र-आत्मनीनमयाज्यमन्यत् । सवनीयं स्वाज्यमन्यत् । तत्राद्यं सप्तषट् पञ्चादिसंकलनयाऽष्टाविंशतिसंख्यम् । द्वितीयं स्वैकविंशति पञ्चदशादिसंकलनया षट् पञ्चाशत्संख्यम् । इत्थं कृत्वा पितरः स्वां प्रजामेकविंशतिभागरूपां, पितृभिः सह पञ्चदशादि

नाक्षत्रमासादुदयैरथस्यैश्चान्द्रोऽम्बुबिन्दून् सृजतीह देहे ॥
पिण्डोऽष्टयुग् विंशतिबिन्दुभिस्तैरुद्भूय चोर्ध्वं वियाति कालेः ॥ ३० ॥
तत्पिण्डसंतानवशात्परत्यान्युद्यन्ति तत्संतननं क्रमेण ॥
परत्वेकयुग् विंशतिरस्य पुत्रे सप्ताम्बुरात्मन्यनुयोगिसत्रम् ॥ ३१ ॥
पुत्राद्गताः पञ्चदशात्मपौत्रे पुत्रे षडुक्ता अनुयोगिसत्रम् ॥
पौत्रात्प्रपौत्रे तु सुता दश स्युः पञ्चाशदिष्टास्तु वसन्ति पौत्रे ॥ ३२ ॥
षट्त्र्येकबिन्दुक्रमतः परेभ्यः सुताः कृताः सोऽपि चापरेऽस्युः ॥
सद्विपमेकः क्रमतोऽस्तिपिण्डः संतानितः सप्तसु पूरुषेषु ॥ ३३ ॥
सौम्यासुरा आत्मगता द्विधा पुनः स्युः सुतश्च स्युः पितरः पृथक् पृथक् ॥
एकाधिका विंशतिरत्र सूनवः सप्ताधिकाः पितरो न सूनवः ॥ ३४ ॥
पुत्रस्य चात्मात्मभिदैकविंशतौ स्युः सूनवः पञ्चदशात्मनीह षट् ॥
पौत्रे पुनः स्युर्दशसूनवः परे पंचाशदिष्टास्तु तदात्मतां गताः ॥ ३५ ॥
षट् सूनवोऽथ त्रय एव सूनवोऽप्येकोऽत्र सूनुः पितरोऽत्रोपिताः ॥
इत्थं क्रमात् प्राणितनौ पृथक् पृथक् ते सूनवस्ते पितरोऽसुरश्च सः ॥ ३६ ॥
पञ्चाशदित्थं सहषड्भिरुत्तरैः सहांसि पित्र्याणि सहानुभेरते ॥
स्यतः पुनर्विंशतिरष्ट चाहिताश्चतुर्भ्युत्तराशीतिसहांसि तद्विदुः ॥ ३७ ॥
तत्सूनवः पितृसहः स्वकं सहोऽप्यात्मयापयन्तीह सहस्थितं द्विधा ॥
आत्माऽभ्युपद्विंशतिरष्ट च ध्रुवाः स्वसंपुमि संततितन्तवे स्मिताः ॥ ३८ ॥
चत्वारि कर्माणि भवन्ति तत्र ग्रहणं ग्रहस्त्यागं उतापराभ्याम् ॥
उत्पद्यजीवन् जनयत्यपत्यान्युत्क्रम्य चन्द्रे निलयं प्रयाति ॥ ३९ ॥
प्रजायते पितृसहोभिराद्वितश्चान्द्राच्च गृह्णाति पृथक् सहः क्रमात् ॥
पितुश्च चन्द्राच्च वहेऽभिमतानि स ह्यात्मानुपादाय सहांसि जीवति ॥ ४० ॥
अथ द्विधास्थापिततत्सहश्च यत् स्वीयं महः पितृसहश्च तन्तुरत् ॥
गोत्रेऽपरेभ्यात्मतमादधुस्तुवत् सात्मतितिनाम तृतीयकर्म तत् ॥ ४१ ॥

---

आत्मरूपं चापरेषु पौत्रादिषु आततं तन्तु वितायमानं पुत्रमादधु । एतदेव तृतीयं कर्म यत् स्व सह पित्र्यसहश्च समुच्चितरूपेणापरेषु पुत्रादिषु सप्तसु पुरुषेष्वावपति । चतुर्थेन तु कर्मणा पित्र्यं सहः परेषु सप्तसु पुरुषेषु पित्रादिषु प्रत्यर्पयिष्यति । तदाह । पारमचारं गच्छन्त्या नौकया अतप्रवाह मिव स्वसितभिर्जीवनमूर्ध्नैरपारस्वरया पृथ्व्या पारस्थायाश्चान्द्रया प्रदिशश्चन्तान्तो दुर्गाणि प्रवाहस्थानीयानि तीर्त्वा वृहदुक्थो नाम महात्मात्मा अहित्वा स्वमहिम्ना स्वां प्रजामेक- विंशत्यादि सुनुरूपामवरेषु पुत्रादिषु सप्तपुरुषेषु पृथ्वीस्थानेषु तथा परेषु पित्रादिषु सप्तपुरुषेषु चन्द्रप्रदिक्स्थेषु चादधु । सौम्यसहस पित्र्यस्य सप्तविभागा कश्चिच्चत्कालात् पृथिव्यां पुत्रादिषु तिष्ठन्ति, कश्चिद्धाकालात् चन्द्रे पित्रादिषु तिष्ठन्ति नातः परं कुत्रापि तत्स्थिति । तदित्थं चत्वारि कर्माणि पितृणां व्याख्यातानि—षट्पञ्चाशत्सहस्यं पित्र्यसहः उपादाय जन्मग्रहणं प्रथमं कर्म ॥ १ ॥ अष्टाविंशतिसहस्य नवीनं निजं सहोपपुत्पादत्ते तद्द्वितीयं कर्म ॥ आत्मा सहोग्रहणं भवति ॥ २ ॥ अथ षट्पञ्चाशत्परस्य सवनीयभागस्यावरेष्वाधानं तृतीयं कर्म ॥ ३ ॥ तथाष्टाविंशतिसहस्यात्मनीनभागस्य परेष्वाधानं चतुर्थं कर्मेति बोध्यम् ॥ ४ ॥

संतानितं सततविधं तदुरक्रमात् पुनर्यदा स्योनिरुपेति तन्निजम् ॥
गोत्रेऽष्टमे स ततितन्तुसंग्रहात् संपद्यते स्वात्मनि पूर्णतागतम् ॥ ४२ ॥
स पुरुषः प्रैति यदा तदानीमयं महांश्चन्द्रमसि प्रयाति ॥
आसप्तमं पुरुषमत्र तिष्ठन् विमुच्यते संततिबन्धसूत्रैः ॥ ४३ ॥
चन्द्रस्थसोतृप्यथ चन्द्रगः सन् प्रत्यर्पयेद् यर्हि तदैष लब्धः ॥
स्वैरष्टयुग्विंशतिबिन्दु भिरते.र्थे च्छ्रद्धसूत्र. स भवेद्वयः ॥ ४४ ॥
यत्सप्ततुर्थं किल कर्म धीयते संसृज्यते यत् त्रिषु पूर्वकर्मसु ॥
भूतैः पृथिव्या सदितोऽतिमुच्यते मास्य प्रज्ञादन्तुरिहास्ति चाततः ॥४५॥
इत्थ पितृस्तोमगतिः सपिण्डता परेषु सप्तस्वपरेषु चोदिता ॥
भूतात्मदिव्यात्मयुजोऽन्तरात्मनःसौमस्य नात.परत.स्थितिःक्वचित् ॥४६॥
पारादवाराच्च तटात् प्रजार्द्रं नावेव चान्द्र्याः प्रदिश पृथिव्याः ॥
दुर्गाणि तीर्थे स्थितिभि. प्रजासु सौम्योरस स्वर्गिदिहासुरेऽस्ति ॥४७॥
यथा तु चन्द्रात् पृथिवीमुपैति यथा पृथिव्या. शशिनं प्रयाति ॥
एव स्वकीयं च सहो नरस्यापरेषु चायाति परेषु याति ॥ ४८ ॥
यदासतं सप्तसु पूरुषेषु श्रद्धानसूत्र प्रददामि तां गाम् ॥
प्रत्यर्पयासौ क्रियते तदासौ स्वयोनिमायाति जहाति यूथम् ॥ ४९ ॥

| | सपिण्डपुरुषा | पिण्डस्य सहांसि | अप-स्थानि | सन्तानाः | | पिण्डभाज पुरुषा पितर. | अपुत्रे पितृ-सहांसि | सपुत्रे पितृस हांसि | |
|---|---|---|---|---|---|---|---|---|---|
| १ | आत्मनि | २८ | ७ | २१ | ७ | वृद्धातिवृद्धप्रपितामहस्य | १ | १ | ० |
| २ | पुत्रे | २१ | ६ | १५ | ६ | अतिवृद्धप्रपितामहस्य | ३ | २ | १ |
| ३ | पौत्रे | १५ | ५ | १० | ५ | वृद्धप्रपितामहस्य | ६ | ३ | ३ |
| ४ | प्रपौत्रे | १० | ४ | ६ | ४ | प्रपितामहस्य | १० | ४ | ६ |
| ५ | वृद्धप्रपौत्रे | ६ | ३ | ३ | ३ | पितामहस्य | १५ | ५ | १० |
| ६ | अतिवृद्धप्रपौत्रे | ३ | २ | १ | २ | पितु. | २१ | ६ | १५ |
| ७ | वृद्धातिवृद्धप्रपौत्रे | १ | १ | ० | १ | आत्मन | २८ | ७ | २१ |
| ० | अष्टमे | ० | ० | ० | | | | | |
| | | ८४ | २८ | ५६ | | | ८४ | २८ | ५६ |

* "अव परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ॥
सा कद्रीची कंस्विदर्धं परागात् क्वस्वित् सूते न हि यूथे अन्तः ॥ ४० ॥

मं. १ सू. १६४ । ऋ १७ ॥

एकत्रय पट् दश त्रिंश पञ्चदशेकविंशत्युदिता विभागाः ॥
स्यु सप्तमाद्व्युत्क्रमपूर्वपुम्भ्योऽष्टाविंशतिस्तु स्वगता विभागाः ॥ ५१ ॥
चतुर्युताशीतिमितैस्तदित्थं सौम्यैः सहोभिर्ध्रियते य आत्मा ॥
सोऽयं महांश्चन्द्रमसो हि लोकादुपेत्य योन्यात्त्विभेश्चमेति ॥ ५२ ॥
प्रेत्येन्दुगश्चन्द्रमसस्तुधाम्ना कोऽसीति पृष्ट प्रतिवक्ति चन्द्रम् ॥
विचक्षणः सोम इतोऽहि रेतो यदाभृतः सोऽहमिहार्तवोऽस्मि ॥ ५३ ॥
नाक्षत्रिकद्वादशमासरूप संवत्सरः सोऽस्ति पिता स गर्भे ॥
देहं विनिर्माति तदेवमर्थं कौषीतकीया भगवन्त आहुः ॥ ५४ ॥

† "विचक्षणाद् ऋतवो रेत आभृत पञ्चदशात् प्रसूतात् पित्र्यवत ॥
तन्मा पुंसि कर्तर्येरयध्वं पुंसा कर्त्रा मातरि माऽऽसिषिञ्च ॥ ४५ ॥
स जायमान उपजायमानो द्वादश त्रयोदश उपमास ॥
द्वादश त्रयोदशेन पित्रा सं तद्विदेह प्रति तद्विदेहम् ॥ ४६ ॥
तन्म ऋतवो १ अमर्त्यंव १ आरभध्व तेन सत्येन ॥
तपसा ऋतुरस्मि, आर्तवोऽस्मि, कोऽसि त्वमस्मि ॥ ४७ ॥
यदस्ति किञ्चित् तदिदं समस्तं स्नेहश्च तेजश्च भवेद् द्विधैव ॥
आर्द्रं च शुष्कं च तदेतदाहुं विद्यादहोरात्रत एव सर्वम् ॥ ४८ ॥

[ शत. का ४ प्र. ४। ब्रा. २। कं. २३ ]

यदस्ति तेजो यदिहास्ति शुष्कं तदग्निमूलं स च सूर्यमूल ॥
तत्सोममूलं स च चन्द्रमूल स्नेहो यदार्द्रं तदहश्च रात्रि ॥ ५९ ॥
गायत्रिका ज्योतिरिदं ह्यहस्तत् पाप्मा तु रात्रिस्तम इत्यथेहि ॥
ज्योतिस्तदग्निस्तम एव सोमस्ताभ्यामिदं विश्वमभिव्यनक्ति ॥ ६० ॥

इति आर्तवाधिकरणम् ।

---

* अग्नावाहुतिर्गोरूपेण स्तूयते–अव परेणेति । आहुतिर्गोरूपा वत्सस्थानीयमग्निमवस्तात् दर्धोदेशे परेण स्वशदेन परस्तादुपरिदेशे स्वनेनावरेण स्वपदेनाक्रूप्य बिभ्रती सती सूर्यं प्रत्युत्तिष्ठति । कद्रीची क्वगतेत्यनिश्चयगमना सा गौः कं विभागमगच्छत् । कुत्र वा प्रदेशे फलमुत्पादयति । इति न ज्ञायते । न ह्येषं गौः समानजातीयगोमध्ये क्वचिद् दृश्यते इत्यर्थः ॥ अथवा सूर्यरश्मिरूपा गौर्वत्सस्थानीयं यजमान पूर्वेक्तरीत्या बिभ्रती दिवं गच्छति । "त अमन्त्येना सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवास "–इति श्रुते । इति सायणव्याख्या ॥

† विचक्षणादिति कौषीतकीयोपनिषदि श्रूयते । "असौ वै सोमो राजा विचक्षणश्चन्द्रमा "– इति कौषीतकिब्राह्मणे ७ अध्याये १० कण्डिकायाम् ( १२। २ च ) ॥ रेत सोम । ( कौ ब्रा १३। ७ ) ॥

## सप्ताहाधिकरणम् ।

द्यावापृथिव्यौ न पृथक् पुरास्तां पृथ्व्या समं द्यौश्च दिवा च पृथ्वी ॥
कालेन सौर्य्या अभवत् पृथिव्या अपत्यरूपा पृथिवीयमन्या ॥ १ ॥
यथा तु सूर्येऽपि च ते सहास्तामद्यापि ते यद्वदिह स्थितेस्तः ॥
यथा च भूमावपि सूर्य्यवत्ते अन्ये सहस्तस्तदिहानुवच्मि ॥ २ ॥
यत्सृज्यते तत् त्रिकमेव साकं ह्याद्यमस्थावयनं तदन्नम् ॥
प्राणो मनोवागिति यत् त्रयं तत् संश्लिष्यते तेन विभाति सूर्यः ॥ ३ ॥
भूमिस्तु येयं पृथिवी पृथक्स्था तत्रापि तद्वत् त्रयमेतदस्ति ॥
सूर्यो मनस्तत्र तु वाक् तदङ्गं वागेव पृथ्वी मन एतदन्नम् ॥ ४ ॥
• सूर्ये स्थितानाममिधा अमीषां ज्योतिस्तु गौरायुरिति क्रमात् स्युः ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| आवपनम् = मनः | मनः = ज्योतिः = द्यौः | ↓ | (सू.) | ↑ | द्यौः=द्यौः=मनः | अग्निः | तेजः | सूर्यः |
| अन्नादः = प्राणः | प्राणः = गौः = अन्त | | + | | अन्त=गौः=प्राणः | इन्द्रः | आपः | वायुः |
| अन्नम् = वाक् | वाक् = आयुः = पृथ्वी | ↓ | (पृ.) | ↑ | पृथ्वी=वाक्=वाक् | विश्वे-देवाः | अन्नम् | अग्निः |

| | अहानि | देवाः | अभिप्लवाः | छन्दांसि | स्तोमाः | पृष्ठानि | रूपाणि | रूपाणि |
|---|---|---|---|---|---|---|---|---|
| १ | अहः | अग्निः | ज्योतिः | गायत्री | त्रिवृत् ९ | रथन्तरम् | करिष्यत् | आयाति प्रयाति |
| २ | अहः | इन्द्रः | गौः | त्रिष्टुप् | पञ्चदशः १५ | बृहत् | कुर्वत् | स्थितम् |
| ३ | अहः | विश्वे-देवाः | आयुः | जगती | सप्तदशः १७ | वैरूपम् | कृतम् | समानोदर्कम् |
| ४ | अहः | अग्निः | वाक् | अनुष्टुप् | एकविंशः २१ | वैराजम् | करिष्यत् | आयाति प्रयाति |
| ५ | अहः | इन्द्रः | गौः | पङ्क्तिः | त्रिणवः २७ | शाक्वरम् | कुर्वत् | स्थितम् |
| ६ | अहः | विश्वे देवाः | द्यौः | अतिच्छन्दाः | त्रयस्त्रिंशः ३३ | रैवतम् | कृतम् | समानोदर्कम् |
| ७ | अहः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः | श्रीः |

• यत्तु तैत्तिरीयसंहितायाम्—"ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्ति । इयं वाव ज्योतिः । अन्तरिक्षं गौः । असावायुः । एष्वेव लोकेषु प्रतितिष्ठन्ति (७ । २।४= ७। ३। ६ = ७। ३। ५) इत्यत्र ज्योतिषः पृथ्वीत्वमायुषस्तु द्युलोकत्वमाम्नातं तत्पूर्व्यापेक्षया द्रष्टव्यम् । प्रतिनियतं स्तरेषु प्रथमादिषु पृथिव्यादिस्तरत्रयस्थत्वात् । सूर्यस्य हि स्तरेषु प्रथमस्य ज्योतिष्ट्वात् तृतीयस्य आयुष्ट्वादविरोधः ॥

भूमिस्थितानां तु पुनस्त्रयाणां वाग् गौरथ द्यौरिति चाभिधाः स्युः ॥ ५ ॥
ज्योतिर्मनः प्राण इहोच्यते गौरायुरत्र च गौरस्ति यदस्ति सूर्ये ॥
वागेव वाक् प्राण इहोच्यते गौर्मन इवेह द्यौर्यदि चेत् पृथिव्याम् ॥ ६ ॥
त्रिवृत्कृतं ज्योतिरिहाग्निरुक्तस्त्रिवृत्कृता गौरिह चेन्द्र इष्टः ॥
त्रिवृत्कृतायुस्त्विह विश्वदेवाः सहाधिदेवाः दिवि ते त्रयः स्युः ॥ ७ ॥
त्रिवृत्कृता वागियमत्र मुक्ता त्रिवृत्कृता गौरुदिता इहापः ॥
त्रिवृत्कृता द्यौरिह तेज उक्तं भूतानि तु त्रीणि भुवि स्थितानि ॥ ८ ॥
यावन्मनस्तावदिहास्ति सा द्यौः पृथ्वी तु सा स्यादिह यावती वाक् ॥
द्यावापृथिव्योः पुनरन्तरिक्षः प्राणस्तयोरेव च सोऽनुषक्तः ॥ ९ ॥
सूर्यस्त्रिलोकीमय एष पूर्वं ह्यासीत् ततोऽभूत् पृथिवी त्रिलोकी ॥
सूर्यो मनो वागथ पार्थिवोऽग्निः प्राणोऽन्तरिक्षः पुनरत्र वायुः ॥ १० ॥
* एकपाद् द्विपदो भूयो विचक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ॥
द्विपाद् षट्पदो भूयो विचक्रमे त एकपदस्तन्वं समासते ॥ ११ ॥
( अथर्व सं. १३। २। २ ) ॥
प्रस्थानभेदाच्च तदित्थमेते द्यावापृथिव्यौ त्रिविधे भवेताम् ॥
सूर्ये पृथक् ते पृथगेव पृथ्व्यां सूर्यश्च पृथ्वी च पृथक् तृतीये ॥ १२ ॥
परे च ये ते अवरे च ये ते द्यावापृथिव्यौ भवतः पृथक् ते ॥
इमे तृतीये तु पिताहिते ते त एव माता पितरौ भवेताम् ॥ १३ ॥
द्यौरेव सूर्यस्त्रिविधिः स उक्तो ज्योतिश्च गौरायुरिति प्रभेदात् ॥ †

---

* इति मन्त्रव्याख्याया गोपथे—"एकपाद् द्विपद इति । वायुरेकपात् । तस्याकाशो पादः । चन्द्रमा द्विपात् । तस्य पूर्वपक्षापरपक्षौ पादौ ॥ आदित्यस्त्रिपात् । तस्येमे लोकाः पादाः ॥ अग्निः षट्पादः । तस्य पृथिव्यन्तरिक्ष द्यौरापओषधिवनस्पतय इमानि भूतानि पादाः । तेषां सर्वेषां वेदा गतिरात्मा"—इति सूर्यस्य अग्नेश्च सम्बन्धेन लोकत्रयाख्यानात् सूर्येऽपि त्रैलोक्यमुपपद्यते पृथिव्यां चेति बोध्यम् । वायुश्चन्द्रस्यायतनं विक्रमते । इतरसंग्रहापेक्षया चन्द्रस्यायतनशीघ्रतया वायुमधाराधिक्योपपत्ते । वायुश्चन्द्रे नास्तीति केचिद्यत्नना आहुस्तद् ज्ञानात् । वायो सर्वाकाशपरिव्यापितया चन्द्रेऽपि संभवात् । वायु विना चन्द्रगत्यसंभवाच्च ॥ चन्द्र आदित्यं पश्चात् परिक्रमते । पश्चादित्युक्त्या सूर्यपरिक्रमणात् प्राक् पृथ्वीपरिक्रमणं लभ्यते । तदेव स्पष्टयति पश्चाद्भ्येति द्विपादिति । चन्द्र पृथिव्या अधिकं विक्रमते पृथ्वीमपरित्यज्यादित्यमभिक्रमते इत्यर्थः ॥ अग्निचन्द्रसूर्यास्त्रयोऽपि स्थिरत्वा वायो शरीरमुपाश्रयन्ते । आकाशस्थत्वाद् वायुना पर्याप्यन्ते इति मन्त्रार्थः ॥

| सूर्ये | | | | |
|---|---|---|---|---|
| ज्योतिः | — | गौः | — | आयुः |
| अग्निः | — | इन्द्रः | — | विश्वेदेवाः |
| गायत्र | — | त्रैष्टुभं | — | जागतम् |
| साप | — | प्रकाश | — | उच्छिष्ट |
| यज्ञ | — | वेद | — | लोक |
| परिणाम | — | दृश्यता | — | भोग्यता |
| बृहत् | — | वैराजम् | — | रैवतम् |

† एतरेय ब्राह्मणोर्ध्व ( १८ अ. ) त्रैलोक्य सूर्यापेक्षया द्रष्टव्य ननु पृथिव्यपेक्षया । उत्तरस्याह इत्युक्ते ॥ ज्योतिर्गौरायुरिति स्तोमभवन्ति "अयं वै लोको ज्योतिः, अन्तरिक्षं गौः, असौ लोक आयुः । स एवैष उत्तरस्माहो ज्योतिर्गौरायुरिति त्र्यहानि"—इत्याद्यभिप्रायपरक इत्यादिका एतरेयश्रुतिरत्र द्रष्टव्या । (ए ब्रा. १८ अ )

ज्योतिस्तद्ग्निस्त्वथ विश्वदेवा आयुश्च गौरिन्द्र इति प्रविद्यात् ॥१४॥
अग्निस्तु सर्वा अपि देवताः स्युः सर्वास्तथेन्द्रोऽपि च देवताः स्युः ॥
विश्वे च देवा अपि देवताः स्युर्देवा हि ते ये दिवमाश्रयन्ते ॥ १५ ॥
देवस्वरूपप्रतिपत्तिहेतुश्छन्दो विनैतेन न रूपसिद्धिः ॥
गायत्रमग्नेरथ वैश्वदेव्यं स्याज्जागतं त्रैष्टुभमैन्द्रमिष्टम् ॥ १६ ॥
तापोऽस्ति यावान् स तदग्निभागो यावान् प्रकाशः स तदिन्द्रभागः ॥
तद्वैश्वदेव्यं तु यतोऽस्य भागाद् भूतानि भूत्वा बहिरामवन्ति ॥ १७ ॥
यावांस्तु तापोऽस्ति ततोऽस्ति यज्ञो यावान् प्रकाशोऽस्ति ततोऽस्ति वेदः।
भूतोद्भवो यावति सोऽस्ति लोकस्त्रिभिः सहस्थैरिदमेकवस्तु ॥ १८ ॥
यावच्च तापोऽस्य चतुर्दिशं ते ग्रहाः क्रमन्ते परिवार्य्य तावत् ॥
प्रकाश एतस्य तु यावदस्ति प्रदृश्यते तावति सोऽवकाशे ॥ १९ ॥
यो भूतभावप्रभवोऽस्य भागः सोऽप्येत यावन् स तृतीयभागः ॥
* इत्थं त्रिरूपं त्रिविधं पुनः स्याद् भर्गो महश्चाथ यशस्तृतीयम् ॥ २० ॥

---

*"सस्थिते संस्थिते सवने वाचयति —"मयि भर्गो मयी महो मयि यशो मयि सर्वमिति। पृथिव्येव भर्गो—ऽन्तरिक्ष एव महो द्यौरेव यशोऽप एव सर्वमिति ॥ १ ॥ अग्निरेव भर्गो वायुरेव मह आदित्य एव यशश्चन्द्रमा एव सर्वम् ॥ २ ॥ वसव एव भर्गो रुद्रा एव मह आदित्या एव यशो विश्वेदेवा एव सर्वम् ॥ ३ ॥ गायत्र्येव भर्गस्त्रिष्टुबेव महो जगत्येव यशोऽनुष्टुबेव सर्वम् ॥ ४ ॥ प्राच्येव भर्गः प्रतीच्येव मह उदीच्येव यशो दक्षिणैव सर्वम् ॥ ५ ॥ वसन्त एव भर्गो ग्रीष्म एव महो वर्षा एव यशः शरदेव सर्वम् ॥ ६ ॥ त्रिवृदेव भर्गः पञ्चदश एव महः सप्तदश एव यशः एकविंश एव सर्वम् ॥ ७ ॥ ऋग्वेद एव भर्गो यजुर्वेद एव महः सामवेद एव यशो ब्रह्मवेद एव सर्वम् ॥ ८ ॥ होतैव भर्गोऽध्वर्युरेव मह उद्गातैव यशो ब्रह्मैव सर्वम् ॥ ९ ॥ वागेव भर्गः प्राण एव महश्चक्षुरेव यशो मन एव सर्वम् ॥ १० ॥ स यदाह मयि भर्ग इति—पृथिवीमेवैत ल्लोकानामाह, अग्निं देवानाम्, वसून्देवान् देवगणानाम्, गायत्रं छन्दसाम्, प्राचीं दिशाम्, वसन्तमृतूनाम्, त्रिवृतं स्तोमानाम्, ऋग्वेदं वेदानाम्, होत्रं होत्रकाणाम्, वाचमिन्द्रियाणाम्। सवा एष दशधा चतु सपद्यते। दश च ह वै चतुर्विंशतोऽक्षराणि। ते गर्भा उपजीवन्ति। श्रीर्वै विराट्। यशोऽन्नाद्यम्। श्रियमेव तद्विराजं यशस्यन्नाद्ये प्रतिष्ठापयति ॥ प्रतिष्ठन्तीरिदं सर्वमनुप्रतितिष्ठति ॥ गोपथब्रा० पू० ५ प्र० ॥

भर्गो महो यश इति अग्निप्रधानामद्भ्योज्योतिर्गवायुपामुच्छिष्टानि त्रय्याणि। उच्छिष्टाज्जज्ञिरे सर्वे इत्याथर्वणश्रुतिः ॥

| १ भर्गः | पृथ्वी | अग्निः | वसवः | गायत्री | प्राची | वसन्तः | त्रिवृत् | ऋक् | होता | वाक् |
|---|---|---|---|---|---|---|---|---|---|---|
| २ महः | अन्तरिक्षम् | वायुः | रुद्राः | त्रिष्टुप् | प्रतीची | ग्रीष्म | पञ्चदश | यजुः | अध्वर्युः | प्राणः |
| ३ यश | द्यौः | आदित्य | आदित्याः | जगती | उदीची | वर्षा | सप्तदशः | साम | उद्गाता | चक्षुः-श्रोत्रे |
| ४ सर्वम् | आप | चन्द्रमाः | विश्वेदेवाः | अनुष्टुप् | दक्षिणा | शरत् | एकविंश | ब्रह्म | ब्रह्मा | मनः |
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

* बृहच्च वैराजकरैवते च श्रीण्यत्र पृष्ठानि द्विधा प्रविधात् ॥
रथन्तरादीन्यपराणि तानि त्रीण्येव पृष्ठानि भवन्ति पृष्ठ्याः ॥ ५१ ॥
बृहन्ति तु त्रीणि मनांसि विद्याद् रथन्तराणि भवन्ति वाचः ॥
एकैकवेषा तु रथन्तराणामेकैकमन्येष्वतिमन्यते तत् ॥ ५२ ॥
त्रिधा च भूमिः पृथिवी यथा द्यौर्वाग् गौरथ द्यौरिति भक्तयोऽष्टधाः ॥
वाचो हि भूतानि च पञ्चगाव कृष्णा अथ द्यौरिह भूतदेहा ॥ ५३ ॥
† देवा मनुष्याः पितरोऽसुराश्चेत्यस्मासि तु वा इह संप्रतीयात् ॥
आपोऽमृतक्षारसुरादयो ये रसाश्च भूतानि तु तानि विद्यात् ॥ ५४ ॥
देवाश्च भूतानि च कृष्णः स्युर्भूतेषु देवाः समधिष्ठिताः स्युः ॥
अमुत्र देवा इव भूतसंघा इहोल्वणा सन्ति तिरस्कृतोऽन्ये ॥ ५५ ॥
आमुष्मिका वा पुनरैहिका वा विपर्ययन्तेऽपि परस्परेण ॥
अन्योन्यमेषां परिवर्तनं यत् स्यात्प्रथिकं स्यादपि कृत्रिमं तत् ॥ ५६ ॥
देवस्वरूपप्रतिपत्तिहेतुश्छन्दो विनैतेन न रूपसिद्धिः ॥
वाचामनुष्टुप् हि गवां त्रिष्टुप् षड्भिर्वयामति च्छन्द इति स्मरन्ति ॥ ५७ ॥
यो भूतभाग प्रथम स भागो भूर्दृश्यते वायव्यं द्वितीय ॥
तायस्तृतीयस्तमभिप्रपन्नो भौमोऽग्निरूर्ध्वं ज्वलिति प्रसह्य ॥ ५८ ॥
वायन् स आप स इहाग्रभागः पश्यन्ति यावद्भुवमाप एताः ॥
तेजः परस्ताच्च तृतीयभागः संस्था पृथिव्या तु विपर्ययेण ॥ ५९ ॥
लोक पुरस्तात् परतोऽस्ति वेदो वेदाश्च यज्ञोऽहरहः प्रवृत्त ॥
पृष्ठान्यथ त्रीणि रथंतरं च वैरूपमूर्ध्वा अपि शाक्करं च ॥ ६० ॥
अमुत्र पश्यामि यथा त्रिधा कृतानिहापि पश्यामि तथा त्रिधा कृतान् ॥
अन्यानि रूपाण्यपि च त्रिधा त्रिधा सर्वत्र पश्यामि तदन्यथादिव ॥ ६१ ॥

---

* इय गायत्र्यन्तरमसौ बृहत् ( तै. स ३। ३। ७ )।
गायत्री च त्रिष्टुप् चेति मसपदा शक्वरी। ( मै सं २। ६। १ )

उभे बृहद्रथन्तरे भवत । इयं वाव रथन्तरम् । असौ बृहत् । आभ्यामेवैनमन्तरेति । वाचश्च मनसश्च । प्राणापानाभ्यां । दिवश्च पृथिव्याश्च । सर्वस्माद्वित्ताद् वेद्यात् ॥ ( तै ब्रा १।४।६ )

यद्वै रथन्तर तद्वैरूपं, यद् बृहत् तद्वैराजम् । यद्रथन्तरं तच्छाक्वरं, यद् बृहत् तद्रैवतम् । ( ऐ ब्रा १७ ख ) । बृहच्च वा इदमग्रे रथन्तरं चास्ताम् । वाक् च वैतन्मनश्चास्ताम् । वाग् वै रथन्तरं मनो बृहत् । तद् बृहत्पूर्वं ससृजान रथन्तरमत्यमन्यत । तद्रथन्तरं गर्भमधत्त, तद्वैरूपमसृजत । ते द्वे भूत्वा रथन्तरं च वैरूपं च बृहदत्यमन्येताम् । तद् बृहद्गर्भमधत्त तद्वैराजमसृजत, ते द्वे भूत्वा बृहच्च वैराजं च रथन्तरं च वैरूपं चात्यमन्येताम् । तद्रथन्तरं गर्भमधत्त, तच्छाक्वरमसृजत । तानि त्रीणि भूत्वा रथन्तरं च वैरूपं च, शाक्वरं च, बृहच्च वैराजं चात्यमन्यन्त । तद् बृहद्गर्भमधत्त । तद्रैवतमसृजत । तानि षट् पृष्ठान्यासन् ( ए ब्रा १६ ख. )

† सूर्य्यादुद्भूता ज्योतिष्मन्त आग्नेया प्राणा देवा ॥ १ ॥ चन्द्रादुद्भूता ज्योतिष्मन्त सौम्या प्राणा पितर ॥ २ ॥ पृथिव्युद्भूतास्तामसा प्राणा असुरा ॥ ३ ॥ मनुष्या देशारीरोद्भूता स्तामसा प्राणा मनुष्या गन्धर्वा वा । जातानां मनुष्या । मृतानां गन्धर्वा ॥ ४ ॥ निर्विशेषा इवत प्रभूता निम्ना प्राणा अप्य ॥ ५ ॥

## तृतीय पृष्ठे



| | काल | वैगनी | शोण | हिरण्य | पीत | हरित | नील | काल |
|---|---|---|---|---|---|---|---|---|
| अग्निः | | | | | | | | |
| सोमः | | | | | | | | |
| | पीत | हरित | नील | कालः | वैगनी | शोण | हिरण्य | |



४० पृष्ठे

४२ पृष्ठे






• आयाति चार्वाग् भवति प्रयाति पराग् भवत्येतदिहैकरूपम् ॥
अथ द्वितीयं स्थितमस्ति रूपं यस्मै न चार्वाक् न पराक् प्रपत्तिः ॥ ६२ ॥
रूपं तृतीयं चलतां समानोदर्के न चेत् पृष्ठपुरोगतिः स्यात् ॥
रूपत्रय यद् यचि तद्वदेव त्रयं प्रविद्यात् पृथिवीविभागे ॥ ६३ ॥

• त्रयो करिष्यत् प्रथमं स्वरूपं कुर्वंस्तुनर्मध्यममस्ति रूपम् ॥
कृत तदन्त्यं तदिदं त्रिधा यद्विकोचमेतत्पृथिवीविभागे ॥ ६४ ॥

• ऋतुत्रयं आग्निकृते वसन्तो ग्रीष्मोऽथ वर्षा ऋतुरेप शुक्ल' ॥
ऋतुत्रयं तत्क्षयकृत् शरद्वा हेमन्त वधं शिशिरः स कृष्णः ॥ ६५ ॥

• प्रातश्च मध्यन्दिनमत्र सायं त्रीण्येव लोके सवनानि सन्ति ॥
बाल्यं च तारुण्यमथो जरा वा सर्वत्र सन्ति त्रिविधा अवस्थाः ॥ ६६ ॥

• अयं च लोकोऽथ यदन्तरिक्षं हासौ च लोकस्त्रय एव लोकाः ॥
यावन्ति चैवं त्रिविधानि लोके सर्वाणि वाक्प्राणमनःकृतानि ॥ ६७ ॥
आमुष्मिकाण्येवमिह त्रयाणि त्रयाणि तद्वत्पुनरैहिकानि ॥
पांसुस्तवहोभिरंश्वाद् विधाता यत्सप्तमं तत्र न कृत्यमासीत् ॥ ६८ ॥
महाव्रतं वा यदि वाऽविवाक्यं स्यात्सप्तमं चाहरिदं मवेच्छ्री ॥

---

* एतदेवमाख्यानस्य त्रिशाध्यायादारभ्यैतत्प्रकरणं द्रष्टव्यम् ॥ पिण्डास्त्रिविधा — स्वज्योतिष परज्योतिष अज्योतिष । स्वज्योतिषा सूर्यादीना त्रीणि पृष्ठानि—बृहत्, वैराजं, रैवतमिति । पृष्ठत्रय साहस्रमुच्यते । तृतीयपृष्ठपर्य्यन्तं सूर्य्यात् त्रिशातिका अर्था. सपृक्ता. सचरन्ति ज्योतींषि च, गावश्चायूंषि च । अहान्येतान्य भिप्लवाख्यानि प्रत्यह पञ्चपृष्ठास्तोमा - त्रिवृत् पञ्चदशै कविंशत्रिणवत्रयस्त्रिंशा । ६ । १२ । २१ । २७ । ३३ । त एव पञ्च देवा अग्नि-वायवादित्या इति त्रयोऽनय वैश्वदेव्य वैद्युतमिति द्वौ सोमौ । तावेव चन्द्रदिगाख्यौ सोमौ ॥ सहस्य चाय सर्वो नाम प्रजापति । तस्य त्रयो भागा—अनिरुक्त सप्तदश वषट्कारश्च । साहस्रस्य प्रभृतिरनिरुक्त, मध्य सप्तदश, अवसानो वषट्कार ॥ तच्छरीरे त्रेधा देवा ज्योतींषि च गावश्चायूंषि च । ज्योतिर्मया आग्नेया, गोमया ऐन्द्रा, आयुर्मया वैश्वदेव्या ॥ अग्नि सर्वा देवता इन्द्र सर्वा देवता, विश्वेदेवा सर्वा देवता । त्रिवृदग्निर्गायत्रश्छन्दा । पञ्चदशेन्द्रस्त्रैष्टुभ । एकविंश आदित्यो जागत त्रिणव सोम आनुष्टुभ । त्रयस्त्रिंश सोमोऽतिच्छन्दा ॥ अष्टौ वसवोऽग्निरिति गायत्र । एकादश रुद्रा इन्द्र इति त्रैष्टुभ । द्वादशादित्या आदित्य इति जागत ॥ यमुभि सभूता द्वादशादित्या वसुमया अष्टविमक्ता भवन्ति त चान्द्र ज्योतिर्मया विश्वेदेवा आनुष्टुभ छन्द । वसुप्राधान्यादष्टाक्षर आनुष्टुभ । दिक् सोमस्त्वतिच्छन्दा इति देवछन्द ॥ एवमज्योतिषा पृथिव्यादीनामपि त्रीणि पृष्ठानि—रथन्तर वैरूप शाक्वरमिति । पृष्ठा साहस्रमेतत् । तृतीयपृष्ठपर्य्यन्त पृथ्वीतस्त्रिशातिका अर्था सचरन्ति—वाग् गौ द्यौ रिति । अहान्येतान्याभिप्लविकानि । अभिप्लवश्चक्रपरिवर्तनम् । एकेनाहोरात्रेण भचक्रस्य यौ परिवर्तनं भगणीयाभिप्लविकत्वम् । अत्राहं पूर्ववत् स्तोमा, देवा, देवगणा, छन्दांसि च ॥ पञ्चस्वपि स्तोमेषु अग्ने परिस्थितिविशेषा ऋतव उच्यन्ते । त्रिवृत् स्तोमेऽग्नेर्मात्रो वसन्त । पञ्चदशान्ते ग्रीष्म । एकविंशान्ते वर्षा ॥ अत परमग्ने शीर्णत्वेनेति शरदाव । त्रिणवान्तेऽग्नेर्हीनत्वाद्धेमन्त । एकैकस्य अग्नेर्द्वौमासात्यहानि भवन्तीति पञ्चर्तव ॥ अग्नेरेव शान्तमन्त आयो सोमौ भुक्ते ॥ अहामन्यस्मिन्नर्थे सक्रमशः सवन त्रयेषा—प्रात माध्यन्दिनं तृतीयं चेति । प्रवृत्ति, विपरीतभावेनोपभोग, निवृत्तिक्रमश्चेति । प्रवेश, पूर्णमध्य, बहिष्कारश्चेति ॥

अग्निमहन्येव हि भोग्यवन्तु समुज्झिमानान् कृतकृत्य आत्मा ॥ ६९ ॥
समाहृताः पूर्णमभूदितीयं तत्सृष्टिकर्मेति वदन्ति केचित् ॥
दशाहतस्तु प्रवदन्ति चान्येऽन्ये द्वादशाहेन वदन्ति तद्वत् ॥ ७० ॥
दिवं त्र्यहेणाथ भुवं त्र्यहेण व्यधात् तदित्थं षडहः स पृष्ठ्यः ॥
छन्दोमनाम्ना तु पशूंस्त्र्यहेण सृष्ट्वा कृतार्थो दशमेऽहनि स्यात् ॥ ७१ ॥
अस्याः पृथिव्या उपरिस्थिता ये दूर्वावनौषध्यवल्लयाद्याः ॥
ये जन्तवः पृश्निवदत्र दृष्टा विधास्पशूंस्तान् क्षितिलोमभूतान् ॥ ७२ ॥
एषां प्रसृष्टिः पृथिवीप्रसृष्टेर्भिन्ना तदित्थं प्रथमं विधाय ॥
द्यावापृथिव्यौ तत एव पश्चात् पशुंस्तथा कृप्राणमनांसि चक्रे ॥ ७३ ॥
ये प्रायणीयोदयनीयभूतौ द्वौ चातिरात्रौ पृथगत्र सृष्टौ ॥
प्रारम्भकालोऽप्यवसानकालमेतौ द्वादशाहप्रतिपूरकौ स्तः ॥ ७४ ॥
एकेन चाह्ना दशभिस्त्र्यहोभिः शतेन चाह्नां च सहस्रकेण ॥
अन्याश्च सृष्टीरसृजद्विधाता सर्वं सहस्रेण तु वत्सराणाम् ॥ ७५ ॥
सृष्टिप्रभेदात्तु तदित्थमह्नां भवन्ति ते ते बहवः प्रभेदाः ॥
तथाप्यहोरात्रकृतैव सृष्टिः सर्वा बभूवेति हि निर्विवादम् ॥ ७६ ॥

| सं. | अहानि | अहर्नामानि | देवाः | छन्दांसि | स्तोमाः | पृष्ठानि | रूपाणि | रूपाणि |
|---|---|---|---|---|---|---|---|---|
| १ | अहः | ज्योतिः | अग्निः | गायत्री २४ | त्रिवृत् ९ | रथन्तरम् १ | करिष्यन् | एति-प्रेति |
| २ | अहः | गौः | इन्द्रः | त्रिष्टुप् ४४ | पञ्चदशः १५ | बृहत् (१) | कुर्वन् | स्थितम् |
| ३ | अहः | आयुः | विश्वेदेवाः | जगती ४८ | सप्तदशः १७ | वैरूपम् २ | कृतम् | समानोदर्कम् |
| ४ | अहः | वाक् | अग्निः | अनुष्टुप् ३२ | एकविंशः २१ | वैराजम्(२) | करिष्यन् | एति प्रेति |
| ५ | अहः | गौः | इन्द्रः | पङ्क्तिः ४० | त्रिणवः २७ | शाक्वरम् ३ | कुर्वन् | स्थितम् |
| ६ | अहः | द्यौः | विश्वेदेवाः | अतिच्छंदाः ४२ | त्रयस्त्रिंशः ३३ | रैवतम् (३) | कृतम् | समानोदर्कम् |
| ७ | अहः | द्यौ | द्यौः | द्यौः | द्यौः | द्यौः | द्यौः | द्यौः |

॥ इति सप्ताहाधिकरणम् ॥

## यज्ञाधिकरणम्

त्रैलोक्यमन्तर्भवतीद यस्मिंस्तत्पारमेष्ठ्यं पदमभ्यतिष्ठत् ॥
* प्रजापतिस्तंतु वितायमानं त्रयीमयं यज्ञ इति प्रतीयात् ॥ १ ॥

[ शत. ४ कां. ४ प्र. ८ ब्रा. ] तै. ब्रा. १ कां ४ प्र. ६ अ.

प्रजापतेर्यत्प्रथमं स्वरूपं तच्चानिरुक्तं हि ततो निरुक्तम् ॥
स्यात्तच्चतुर्धा प्रविभक्तमीक्षे मूलं च सत्यं च यशं च यज्ञम् ॥ २ ॥

प्राणा इमे तत्र गतास्तु वाचस्तेजांसि ते ज्योतिषि मानसे स्युः ॥
एते त्रयः संमिलिता इहात्मा प्रजापतिः स प्रथितः स यज्ञः ॥ ३ ॥
प्राणो मनो वागिति मूलरूपं वागेव सत्यं द्विविधं तदिष्टम् ॥
लोकाश्च वेदाश्च पृथक् त्रयस्ते मर्त्या नु लोका अमृता नु वेदाः ॥ ४ ॥

लोकाः–यद्भूर्भुवः स्वस्तदियं त्रिलोकी स्थौल्याच्च सौक्ष्म्याच्च ततोऽपि सौक्ष्म्यात् ॥
पृथ्व्यन्तरिक्षद्युविभागतोऽपि स्थौल्याच्च सौक्ष्म्याच्च ततोऽतिसौक्ष्म्यात् ५ ॥
भूरादिकं तत् त्रिकमन्तरन्तः पृथ्व्यादिकं स्यात्तु बहिर्बहिस्तत् ॥
स्थूलेन तु स्थूलमथातिसूक्ष्मेणोहातिसूक्ष्मं समतामुपैति ॥ ६ ॥
यावद्घनं तत्पृथिवीस्वरूपं तेजो द्युरूपं प्रतपत्स्वभावम् ॥
परस्पन्दते यत्पवते तदन्तरन्तरन्तरिक्षं त्रिषु लोकयन्ते ॥ ७ ॥

वेदाः—स्तोमो यजुश्चेत्यथ सामऋक् च रथन्तरं नाम बृहच्च तद्वत् ॥
विद्यात्रयीयं प्रथते तदंशं ताः प्राणकल्पा अमृताहि वाचः ॥ ८ ॥
विद्यात्रयी साम यजुश्च ऋक् च त्रय्यां हि भूतान्यखिलानि सन्ति ॥

[ शत. १० । ३ । १ ]

त्रयीन्तु विद्यामिह सत्यमाहुः तत्तायते सत्यमितो हि यज्ञात् ॥ ९ ॥

[ शत. ६ । ४ । २ ]

वेदत्रयी वागियमस्ति सर्वा वेदास्त्रयो यावति तावति स्यात् ॥
प्राणात्मयज्ञोऽयमथास्य योनिर्यज्ञस्य वेदास्त्रय आशयश्च ॥ १० ॥
† यज्ञो हि वेदाशय एव योनिर्वेदत्रयस्येत्यथवा वदामः ॥
विद्या त्रिधातुस्त्वियमाश्रयेऽस्मिन् शेते त्रिधातुस्तत एव यज्ञः ॥ ११ ॥

[ शत. ५ । ४ । ७ ]

वेदैर्हि यज्ञं तनुते यजुर्भिस्त्वग्रेऽथ ऋग्भिस्त्वथ सामभिस्तु ॥
यज्ञस्य रूपं क्रियते त्रयस्ते वेदास्त्रयीरूपमथैष यज्ञः ॥ १२ ॥

*

वेदत्रयी वागियमस्ति तत्र प्राणः स वाचैव तया त्रिलोकीम् ॥
उत्पादयन् विक्रमते त्रिधासौ त्रिविक्रमो विष्णुरतः स उक्तः ॥ १३ ॥

---

* प्रजापतिर्वा एव वितायते यद्यज्ञः । तै. ब्रा. १ । ४ । ६ ॥

† यज्ञो वै विष्णुः । स देवेभ्य इमां विक्रांतिं विचक्रमे येषामियं विक्रान्तिः । इदमेव प्रथमेन पदेन पस्पार । अथेदमन्तरिक्षं द्वितीयेन । दिवमुत्तमेन । एतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते ॥

दिवं महोक्थेन महाव्रतेनान्तरिक्षमाप्नोद्भिममग्निना च ॥
पृथ्वी चितोऽग्निर्महदुक्थमस्ति द्यौरन्तरिक्षं तु महाव्रतं स्यात् । १४ ॥
यावन्महोक्थं सऋचां समुद्रो महाव्रतं नाम समुद्र एषः ॥
अग्निस्त्वमीषां यजुषां समुद्रस्त्रयः समुद्रा इह देवलोकाः ॥ १५ ॥
छन्दांसि तान्यत्र तानि यानु लोकाश्च लोकाननु चायमात्मा ॥
एकैक आत्माऽयमतः शरीरं पृथक् समुद्रैः क्रियते समुद्रः ॥ १६ ॥
यत्रेषु यज्ञः सवतेऽधिरूढो वेदेषु देवोऽइन्द्रस्तु तद्वत् ॥
यथाह्निकं मासिकमेव संवत्सरो यथाहानि महाव्रतं तत् ॥ १७ ॥

प्राणश्च पञ्चाधिपतोऽस्ति देवान् महत्सदुक्थं प्रतिपादयामः ॥
आप्याय्यतेऽशीति यदान्महोक्थं तदायमर्को ध्रुवमग्निरात्मे ॥ १८ ॥
अर्चन् महाव्रते चरतीह सोऽर्कोऽशीतिं स आप्नोति ततोऽयमग्नि ॥
अशीतिरन्नं च इहान्नभोक्ता सोऽर्कः स उत्तिष्ठति निष्कमुक्थाम् ॥ १९ ॥
प्रजापतिर्यावदयं पुरासीद् भूतानि भूत्वा स बभूव रिक्तः ॥
प्राणा हि यावन्त इमान्यभूवन् भूतानि भूतेष्वसुनाभ्यसुहरे ॥ २० ॥
प्रजापतिः सोऽश्वदयं पृथ्वी भूतमन्नरसं दिव एव देवाः ॥
संभृत्य तद्भूतरसं हि तेजसैनाभिपश्यन् स महानवर्ति ॥ २१ ॥
संवत्सरं यत्परिपच्यतेयं महदुद्यनं तत्स्तव चायुरस्मै ॥
इन्द्रः प्रजेशः स महांस्ततोऽभूत् तदा व्रतं तद्धि महाव्रतं स्यात् ॥ २२ ॥
महाव्रतं यत् तदहः प्रसिद्धं तदग्रमेद्धं बृहतीसहस्रम् ॥
अशीतयस्ता' प्रभवन्ति ताभिर्महोक्थमाप्याययत इत्यवेहि ॥ २३ ॥
प्रत्येकमाहुर्बृहतीषु षट्त्रिंशदक्षराण्येव तदक्षरं तु ॥
विराड्डिहाग्निः स दशाक्षरः स्यात् श्रीएषत तत् पवित्रनाम्यदानि ॥ २४ ॥
प्राणो हि तस्माद् बृहतीसहस्रात् संपद्यमानात् परतोऽस्ति सोऽयम् ॥
महामयो ब्रह्ममयोऽथवा स्यात्स देवतात्माऽप्यथवाऽमृतात्मा ॥ २५ ॥
अग्निर्यजुः स्यादिह चीयते यो वयोविधोऽसौ गरुडः सुपर्णः ॥
अङ्गानि चास्येह वयोविधानि संवत्सरोनाम प्रजापतेः स्वः ॥ २६ ॥
स शंस्यते तस्य रसोऽत्र भागान्महत्सदुक्थं प्रतिपादयामः ॥
रसं तमस्याप्यनुयात्यृचा च साम्ना च भूयो यजुरेति चाग्रे ॥ २७ ॥
लोके विलोके न महाव्रतं तत्सद्वा विलोके महदुक्थमेतत् ॥
अग्निं तु पश्यामि सपत्र आत्मा रसस्तु भूत्वाग्निमपीत एते ॥ २८ ॥
ऋक्सामयोरत्र यजुःप्रपीतिर्यजुस्तदाश्रित्य हि ते भवेताम् ॥
उत्पद्यते यत्र यजुर्नवीनं तदृक् च सामापि नवे भवेताम् ॥ २९ ॥
सूर्ये श्रयौ तावदुदाहरामो यन्मण्डलं भाति महत् तदुक्थम् ॥
यद्दीप्यतेऽर्चिस्तु महाव्रतं तद् यन्मण्डलेऽस्मिन् पुरुषोऽस्ति सोऽग्निः ॥३०॥
"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अन्हः ॥
"सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ ३१ ॥
(तै. सं ४ । ३ । ११ भाष्ये श्रुतिः)

इत्येवमन्यैर्यदुदाहृतं प्राक् तत् कल्पनामात्रमसारमुक्तम् ॥
वेदैस्त्रयीभिस्त्रिभिरेव सूर्यः प्रातश्च सायञ्च दिवा च नक्तम् ॥ ३२ ॥
त्रय्येव विद्या तपतीयमेषा यो मण्डलेऽस्मिन् पुरुषः स मृत्युः ॥
यद्दीप्यतेऽर्चिस्त्वमृतं तदेतदत्त्येव मृत्युर्म्रियतेऽमृतस्थः ॥ ३३ ॥
"अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम् ॥
मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्वति" ॥ ३४ ॥
तदर्चिषस्तत्पुरुषस्य चैतद्यन्मण्डलं सा भवति प्रतिष्ठा ॥
उक्थं महत्स्येव महाव्रतं स्यादग्निश्च सर्वत्र तथेति विद्यात् ॥ ३५ ॥

अग्निर्द्विधाऽस्त्याहवनीय एकः प्राणाश्चितेऽग्नौ सति धीयतेऽग्निः ॥
यश्चीयतेऽग्निः सहितान् यजुर्यत् स पूरुषोऽस्मिन् पुरुषाश्च सप्त ॥ ३६ ॥
चत्वार आत्मा पुरुषा अथ द्वौ पक्षावथैकः पुरुषोऽस्ति पुच्छम् ॥
तैः सप्तभिर्यः पुरुषः स एकः प्रजापतिः श्रीभिरमुष्य शीर्षम् ॥ ३७ ॥
स्रुक्स्रुवामयो नोत्क्रमणं कदाचित् से नाग्नमन्यस्य तयोश्च नाकम् ॥
अग्निस्तु वागेवमतः स गच्छत्युत्क्रम्य तृप्तिं कुरुते परस्य ॥ ३८ ॥
चित्तस्य वाचश्च य उत्तरोत्तरक्रमः स यज्ञो मत ऐतरेयके ॥
मनोऽस्ति वाचो मनसोऽपि वागियं प्राणस्य यज्ञस्य हि ते सुवर्तनी ॥ ३९ ॥
येऽन्यः पराङ्व्याहितचैत्ततेजो यद्दं विरुद्धं चरदप्लिताधीः ॥
अहितत्वधीकल्पकवस्तुधर्मो वेदोऽथ वेद्योद्भवकृद्धि यज्ञः ॥ ४० ॥
सोमोऽमृतं सोम विना कृतं नवं सोमेन सोमो यदि हूयते यतात् ॥
तस्मिन् सहस्त्यग्निरुदेति सोमजो यतः सहो यज्ञमिमं प्रचक्षते ॥ ४१ ॥
* अग्नौ कृतोऽग्निस्त्वनुपैति सोमः स वाग्निरुद्धान् म्रियते स सोमः ॥

( बृहज्जाबालोप. २ ब्रा. )

अग्निश्च सोमश्च विपर्ययेते यतो मिथो यज्ञमिमं वदामः ॥ ४२ ॥
प्रजापतिस्तायत एव यज्ञः प्रजाः प्रजातास्तत एव सर्गाः ॥

( तै. ब्रा. १।४।६ )

यज्ञं तमेवान्वखिला इदानीमपि प्रजायन्त इति ब्रवीमि ॥ ४३ ॥

( शत. ४ का. ४ अ. ८ ब्रा. )

प्रजास्तु देवा वसवोऽष्ट रुद्रा एकादश द्वादश चादितेयाः ॥
द्यावापृथिव्यौ च तदित्थमेते देवास्त्रयस्त्रिंशदमे प्रसिद्धाः ॥ ४४ ॥
प्रजापतीन्द्रौ च वषट्कृतीन्द्रौ प्रजापतिः सोऽनु वषट्कृतिर्वा ॥
अहश्च रात्रिश्च तथाश्विनौ वा द्यावापृथिव्यौ च मतानि वोढा ॥ ४५ ॥

---

* अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते । अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत् १
ऊर्ध्वशक्तिमयः सोमो अधः शक्तिमयोऽनलः ॥ ताभ्यां संपुटितं तस्माच्छश्वद्विश्वमिदं जगत् २
अग्निरूर्ध्वं भवत्येव यावत्सौम्यं परामृतम् ॥ यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः ३
अतएव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वगा ॥ यावदादहनश्चोर्ध्वमधश्च पावनं भवेत् ४
आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः । तथैव निम्नगः सोमः शिवशक्तिपदास्पदः ५
बृहज्जाबालोपनिषदि द्वितीयब्राह्मणम् ।

ऊर्ग् वा यदो क्रामति तामगृह्णात् नाभ्यामुभाभ्यामत एव ताभ्याम् ॥
अस्त्यूर्ग् गृहीता य इदाधमत्ति स प्राणितीहोर्जयतीदमेवम् ॥ ७३ ॥
प्राणाद्ययोरुत्क्रमणेऽप्यगृह्णादूर्जं ते तेन च ते गृहीते ॥
ऊर्जायमेवोर्जयतीह लोके स एवाहि प्राणिति सोऽन्नमत्ति ॥ ७४ ॥
अन्योन्यतस्तानि ततो गृहीतान्येकत्र सन्त्यात्मनि संनिपत्य ॥
तदन्नमस्मिन् प्रतिपद्यमाने सर्वेऽपि देवाः स्युरनुप्रपन्नाः ॥ ७५ ॥

"तद्वै स प्राणोऽभवन्महान् भूत्वा प्रजापतिः ॥
भूतो भुजिष्या विरजा यन् प्राणान् प्राणयन् पुरि ॥ ७६ ॥"

प्रजापतेर्नश्यति यावदुत्क्रमे संरक्षते तावदिमं दिवौकसः ॥
तन्मध्यतः सर्वमिदं हितेऽदधुः प्राणं तथान्नं च तथोर्जमीदृशीम् ॥ ७७ ॥
अग्नौ चितेऽग्निस्तु निधीयते यः प्राणः स वाचि प्रतितिष्ठतीह ॥
स गार्हपत्याहवनीयधिष्ण्यात्मको विराडग्निरिहास्ति यज्ञः ॥ ७८ ॥
इदं शिरोऽश्वस्य तु हूयतेऽन्नं देवेभ्य एभ्यः शिरसि स्थितेभ्यः ॥
यज्ञो हि देवान्नमतः स यज्ञो यद्धूयते तेन परोऽस्ति यज्ञः ॥ ७९ ॥
परिश्च पश्यामि स एव सर्वो यज्ञः पृथग्वस्तुतयास्ति सिद्धः ॥
प्रत्यर्थमिद्धाग्निषु हूयतेऽन्नं देवेभ्य एभ्यो हि तन्नोऽस्ति सोऽर्थः ॥ ८० ॥
सूर्यश्च यज्ञः पवनश्च यज्ञो योऽग्निः स यज्ञः पुरुषोऽस्ति यज्ञः ॥
न क्वापि लोके तदहं त्रिलोके पश्यस्यस्ति यत् किन्तु न सोऽस्ति यज्ञः ॥ ८१ ॥
अहर्निशं तायत एव यज्ञः संतिष्ठते चाहरहर्नियुक्तः ॥
स्वर्गस्य गत्ये किल यज्ञमेनं यजन् च स्वर्गमुपैति नित्यम् ॥ ८२ ॥
स्वर्गश्च संवत्सरमध्यवर्ती यद् भाः परं दीधितिमण्डलान्तः ॥
स्वर्गः सदाहवनीय एषो वेदाः समुद्रा इति वा त्रयः स्युः ॥ ८३ ॥

वेदिः प्रसिद्धा भवतीह येन पश्चार्धदेशस्थ अनुगार्हपत्यः ॥
पूर्वार्धमन्याहवनीयकुण्डः कुशाद्दक्षिणे तत्र च दक्षिणाग्निः ॥ ८४ ॥
[illegible] एष सर्वोऽपरगार्हपत्यो वेद्यन्तमभ्यर्हति पश्चिमं सः ॥
अन्यस्तु तत्राहवनीयकुण्डः प्राच्यां तयोर्मध्यगता च वेदिः ॥ ८५ ॥
वेद्यां च दर्भाः प्रभवन्ति कुण्डे धिष्ण्यानि देवा इह ऋत्विजः स्युः ॥
देवोऽयमात्मा यजमान उक्तो हवींषि पुरोडाशवपाज्यसोमाः ॥ ८६ ॥
मध्येऽष्टधिष्ण्याग्नय इत्यमेते दशाग्नयो नाम विराट् स एकः ॥
योऽग्निस्तु तत्राहवनीयनामा तस्मिन् समस्ता इह देवताः स्युः ॥ ८७ ॥
यथा शरीरं पुरुषेऽस्ति वेदिः शिरस्तु तत्राहवनीयकुण्ड ॥
धिष्ण्याग्नयो हृदय गार्हपत्यो योन्यादिनाभ्यन्तकृते प्रदेशे ॥ ८८ ॥
योनिप्रदेशस्त्विह गार्हपत्यः स्यान्नाभिरस्याहवनीयकुण्डः ॥
प्रादेशमात्रस्त्विह योऽस्ति गर्भो विष्णुः स उक्तोऽत्र च सास्ति वेदिः ॥ ८९ ॥
इयं हि पृथ्वी प्रथमास्ति वेदिस्तत्पश्चिमे तिष्ठति गार्हपत्यः ॥
प्राच्यां दिशि त्वाहवनीय एष प्रहूयते यत्र च सोमराशिः ॥ ९० ॥

पृथ्वी समग्रापि च गार्हपत्यो द्यौः सूर्यवत्याहवनीयकुण्डः ॥
धिष्ण्याऽन्तरिक्षं तदिहास्ति वेदिर्यस्तत्र यज्ञस्तदिदं तु विश्वम् ॥ ६१ ॥

यज्ञः स्वयंभूरिह कश्चिदास्ते जुहोत्ययं सर्वहुदात्मनीदम् ॥
तस्माच्च ऋक् साम यजुश्च जज्ञे ततः प्रवृत्ताः सकला हि यज्ञाः ॥ ६२ ॥
प्राणो हि वाचा मनसा च भावितो यज्ञस्वरूपं तनुतेऽथ यज्ञतः ॥
प्राणस्य यो जायत आश्रयः पृथक् स चित्यभूतः स पशुर्हिरण्मयः॥६३॥
स्थूलेस्तु भूतैः कृतरूपमेतत् पश्यामि यत् स्थाप्सु चारिष्णु वेदम् ॥
देहेऽपि लोमत्वगसृङ्मुखाख्यः पशुस्तदन्तर्निहितोऽस्ति सत्यः ॥ ६४ ॥
यज्ञो न चेत्स्यान्न पशुः कश्चित्स्याद् यज्ञोऽपि सोऽयं पशुभिः कृतः स्यात् ॥
पशुर्न चेत्स्यान्न भवेत्स यज्ञो यज्ञेन यज्ञं स्वयजन्त देवाः ॥ ६५ ॥

## इति यज्ञाधिकरणम् ।

अधिदैवतमध्यात्मं च यज्ञो व्याख्यातो गोपथे पू० ४ प्रपाठके—"अयं वै यज्ञो योऽयं प्राणः पवते । तमेत ईप्सन्ति ये संवत्सराय दीक्षन्ते ।.. । अयं वै लोको गृहपतिः । अस्मिन् वा इदं सर्वं लोके प्रतिष्ठितम् ॥ १ ॥ चन्द्रमा वै ब्रह्माऽधिदैवं, मनोऽध्यात्मम् । आदित्यो वा उद्गाताधिदैवं चक्षुरध्यात्मम् । पर्जन्य आदित्यः ॥ अग्निर्वै होताधिदैवं वागध्यात्मम् ॥ वायुर्वा अध्वर्युरधिदैवं प्राणोऽध्यात्मम् ।

| | होत्रकाः | आधिदैवम् | अध्यात्मम् |
|---|---|---|---|
| १ | गृहपतिः | प्राण· | प्राणः |
| २ | होता | अग्निः | वाक् |
| ३ | उद्गाता | आदित्यः | चक्षुः |
| ४ | अध्वर्युः | वायुः | प्राणः |
| ५ | ब्रह्मा | चन्द्रमाः | मनः |

## चातुर्होत्राधिकरणम् ।

यद्दीप्यते ज्योतिरदः परोदिवो विश्वस्य पृष्ठेषु यदिस्त्रिलोकतः ॥
यस्य प्रतापात् तपनास्तपन्त्यमी आत्मा न यतोऽस्ति विभुः प्रजापतिः॥१॥
ब्रह्मा मनस्तत्परितः प्रवृत्ताः प्राणा अथैतैः सहितः स यज्ञः ॥
स्तोमास्तु यज्ञाङ्गविभागभूताः षट् ते त्रिवृत् पञ्चदशादयः स्युः ॥ २ ॥
मनोमयः प्राणमयः स वाङ्मयः प्रजापतिर्यत्परितो वितायते ॥
[ तै. ब्रा. २ का. ४ प्र. ६ अ. ]
तमेव यज्ञं प्रवदन्ति हूयते स्तोमेष्वहः स्वात्ममायशेषसंपदे ॥ ३ ॥
स्तोमा इमे ब्रह्मण एव तस्य प्राणास्तथा येषु भवन्ति षट्सु ॥
भूचन्द्रयोर्धातुरहस्कराग्न्योर्यद्वास्य तेजांसि सहस्थितानि ॥ ४ ॥
तान्येव तेजांसि पृथग् भवन्ति होतॄणि पञ्चेति हि पञ्चयज्ञाः ॥
पृथक् प्रवृत्ताः सकलैस्तु यज्ञैरेकोऽस्ति यज्ञः स मतो ममात्मा ॥ ५ ॥

महास्ति नाभावथ पञ्चपक्षाः स्तोमेषु दृष्टास्तमनुप्रवृत्ताः ॥
प्राणाः परेषामपि तत्र सेतुः प्रजापतिः सर्वविधोऽस्ति यज्ञः ॥ ६ ॥

[ कौ. ब्रा. १३ अ. १ कं. ]

यद्दोश्च भूयान् भवितुं प्रजापतिर्यज्ञात्मकोऽयं दशहोतृनामगात् ॥
आत्मानमेको दशधा व्यधादसौ तेभ्यः स देवानसुरान् ससर्ज ह ॥ ७ ॥
सत्यानृतोर्ध्वाधरदक्षसव्याभिमुख्यवैमुख्यविवृद्धिनाशाः ॥
लोकत्रयं सत्यमथानृतं दिक् स्फुटाः परद्वन्द्वगता हि भावाः ॥ ८ ॥

[ तै. ब्रा. २ का. २ प्र. १—११ अ. ]

प्राणान् विधायायतनं त्रिवृन्मयान् प्राणं जुहावात्मनि चेन्द्ररूपिणि ॥
वीर्यं तु वीर्यं स यतोऽजुहोत् ततः स्वेदेव देवा असुराश्च जज्ञिरे ॥ ९ ॥
यः पार्थिवः प्राण इमं तमाहुस्तत्र त्रिवृत् प्राण इतीह देवाः ॥ *
सर्वेऽसुरास्तज्जनिता भवन्ति तदग्निहोत्रं दशहोतृकल्पनम् ॥ १० ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| १ ऊर्ध्वः प्राणाः | = | अहः | उदयः | [illegible] | अतो देवाः |
| २ अवाञ्चः प्राणाः | = | रात्रिः | निरोभावः | [illegible] | अतोऽसुराः |
| ३ पूर्वपक्षः | = | अहः | आप्यायनम् | ⊙ | अतो देवाः |
| ४ कृष्णपक्षः | = | रात्रिः | अपक्षयः | ∘ | अतोऽसुराः |
| ५ दिवा | = | अहः | आभिमुख्यम् | [illegible] | अतो देवाः |
| ६ नक्तम् | = | रात्रिः | वैमुख्यम् | [illegible] | अतोऽसुराः |
| ७ सत्यम् | = | अहः | सत्ता | | अतो देवाः |
| ८ अनृतम् | = | रात्रिः | नाशः | [illegible] | अतोऽसुराः |
| ९ दक्षिणभागः | = | अहः | सहकारः | →—→ | अतो देवाः |
| १० सव्यभागः | = | रात्रिः | तिरस्कारः | ←—← | अतोऽसुराः |

देवास्तु सत्येन च दक्षभागे वलक्षपक्षे च दिवा तथोर्ध्वैः ॥
प्राणैरधःस्थैस्त्वनृतेन सव्येऽपक्षीणपक्षे निशि चासुराः स्युः ॥ ११ ॥
आप्यायिता ऊर्ध्वत एव देवाः शुक्लाश्च सत्यं किल वीर्यवन्तः ॥
मृद्धाश्च कृष्णा अनृतं त्ववाञ्चः प्रध्वंसितास्ते ह्यसुरा भवन्ति ॥ १२ ॥
स्तोमोऽसृजत् पञ्चदशस्तु मध्ये स्तोमं तमन्वं त्रिवृतं ततस्तौ ॥
पूर्वापरौ चाभवतां तु पक्षौ पूर्वे तु देवा अपरेऽसुराः स्युः ॥ १३ ॥

[ तै. ब्रा. १।२।३ ]

इत्थं त्रिवृत्स्तोमगताः परेपि चतुर्विधद्वन्द्वमया विभागाः ॥
सूर्याग्निसंबन्धवशादभूवन् सूर्याग्निहोत्रं ततं उच्यतेऽयम् ॥ १४ ॥

[ शत. २ कां. ३ अ. १ कं शत ११।३।१ ]

सर्वे च देवा असुराश्च सर्वे प्रत्येककाये निवसन्ति नृणाः ॥
तत्रात्मपुष्ट्यै प्रचरन्ति देवा आत्मापकृत्या असुराश्चरन्ति ॥ १५ ॥

---

* त्रिवृत् प्राणः पार्थिवोऽग्निः एकविंशः प्राण आदित्यः ॥ ( तै. ब्रा. )
त्रिवृदग्निः । पञ्चदश इन्द्रः । सप्तदशः प्रजापतिः । एकविंश आदित्यः ।
हिरण्मयमहः । राजती ज्यौत्स्नी रात्रिः । आयसी कृष्णारात्रिः ॥

पञ्चैव देवाः प्रभवन्ति देहे दिशोऽग्निवायू तपनश्च सोमः ॥
सोमो मनोऽर्कोऽक्षिचवागिहाग्निः श्रोत्रं दिशः प्राण इहास्ति वायुः ॥ १६ ॥
प्रेता भवेच्चैव उताऽऽत्मनो यद् दृष्टं श्रुतं चिन्तितमेवमुक्तम् ॥
तद्दैवक्लृप्तं विपरीतमेवां तत्पाप्मना विद्धमसुर्यमाहुः ॥ १७ ॥
अग्निस्तु रक्षोघ्न इतीव नासुरः प्राणे प्रभुः संभवतीह कर्हिचित् ॥
द्वैधं यथाऽन्यत्र तथा न दृश्यते प्राणे श्वसन् जीवति सर्वदैकधा ॥ १८ ॥
प्रजापतेरात्मन एव देवा आदित्यवाय्वग्नय उद्बभूवुः ॥
देवास्त्रयस्ते विभवन्ति विश्वं तेषां हुतात् संभवतीह सर्वम् ॥ १९ ॥

[ तै. ब्रा. २।१।६ ]

प्राणाय वाचाय च चक्षुषे चाग्निवायुसूर्या इह जुह्वति स्त्रम् ॥
अग्निर्व्यधात् प्राणकुलानि वायुर्गोत्राणि चक्षूंषि रविः ससर्ज ॥ २० ॥

[ तै॰ ब्रा॰ २।१।६ ]

आत्मा मनोबुद्धिमयोऽत्र चक्षुस्तदिन्द्र आदित्य इह प्रयुङ्क्ते ॥
वागन्य आत्मा तु शरीरमेतद् वायोरथ प्राण इहाग्नितः स्यात् ॥ २१ ॥
इत्येवमेकेऽथ परेऽन्यथाहुः प्राणः शरीरेऽन्तरितोऽग्निभूः सः ॥
प्राणाश्रयो वायुवशस्तु कायो बहिस्तु कायाद्व्यविजग्म चक्षुः ॥ २२ ॥

प्राणाधिनाभूतमिदं मनोऽपि प्राणेन तेनात्र भवेद् गृहीतम् ॥
यानीन्द्रियाण्यत्र च यानि भूतान्येतानि सर्वाणि तदाश्रितः स्युः ॥ २३ ॥
स्पर्शोऽथमुष्णोऽग्निनिबन्धनोऽस्मिन् देहेऽस्ति चेत् प्राणिति तावदेषः ॥
अग्नौ प्रशान्ते तु न तत्र चेष्टा न चेतना नापि तदिन्द्रियाणि ॥ २४ ॥
अग्नौ च निर्वाणमिते शरीरे रसादिभूतान्यपि नोद्भवन्ति ॥
उद्भूतभूतान्यपि विस्रसन्ते प्रवर्तते तत्र च पूतिगन्धः ॥ २५ ॥

भूतेभ्य एभ्यस्तु शरीरमस्थिसिराशीर्षका पादतलाङ्गसंस्था ॥
संपद्यते वायुवशेन वायोः स्तब्धं च दृब्धं च समस्तमङ्गम् ॥ २६ ॥
वायुर्द्विधा रेतसि डिम्भयुग्मं करोति वायोर्निखिलाङ्गचेष्टा ॥
वायुप्रकोपाद् विषमत्वमङ्गे स वायुरीष्टेऽत्र शरीरयष्टौ ॥ २७ ॥

अथो शरीरस्य यदस्ति रूपं तत्तच्छरीराद्बहिरेति दूरे ॥
तस्मिन् हि चक्षुर्निहितं शरीरं तद् दृश्यते चक्षुरिदं वदामः ॥ २८ ॥
सूर्यस्य रश्मिः प्रतिपद्य कायं प्रत्याहतो भिन्नगतिः स तिर्यक् ॥
प्रत्यङ्गबिन्दुप्रतिमूर्तिक्लृप्त्या चक्षुष्यपूर्वां कुरुतेऽङ्गसंस्थाम् ॥ २९ ॥

इत्थं च गौरेव हुतादमीषामभूदमीषां न हुतानि चेत् स्युः ॥ [तै. ब्रा. २।१।६
रश्मिस्तदा न प्रतिघातभेदान्न कायतो गौर्न च वस्तुदृष्टिः ॥ ३० ॥

चक्षुष्पदो भाति शरीरमस्मिन् प्राणास्तदित्थं नितरां सहास्ते ॥
प्राणो न चेत्स्यान्न तनुर्न चक्षुस्तदा भवेत् तेन तदग्निहोत्रम् ॥ ३१ ॥
गौरग्निहोत्रं हि तमग्निमिद्धा प्राणापानाश्च समर्द्धयन्ती ॥ तै. ब्रा. २।१।८
अग्नेश्च इत्थैव समस्तमेतत् संपद्यते स प्रथमोऽस्ति यज्ञः ॥ ३२ ॥

अजायताथो दशहोतृनश्चतुर्होता स देवासुरस्पर्धानन्तरम् ॥
* देवासुराणामथ चेन्द्र आहुतेर्देवैश्चतुर्भिर्जनितो बभूवह ॥ ३३ ॥
त्वष्टा च मित्रश्च पृथक्प्रजेतां द्यावापृथिव्यौ पृथगत्र देवौ ॥
चत्वार एतेऽजुहवुः समेताः सोमोऽत्र तेषां गृहपस्तदासीत् ॥ ३४ ॥
त एक विश्वायतनेन वीरं तमिन्द्रमेषामसृजन् सुराणाम् ॥
इन्द्रोऽथ येऽप्यारुरुहुश्च देवाः स्वर्गं हि वीर्येण तदिन्द्रियेण ॥ ३५ ॥
भूमिः प्रतिष्ठाऽग्निरयं विशो द्यौस्त्वष्टा नु रूपं विकरोति सर्वम् ॥
मित्रश्च वीर्यं प्रददाति सोमे प्राणोऽयमाहित्य इहस्वयमन्त्रः ॥ ३६ ॥
प्रतिष्ठयैव प्रतितिष्ठतीदं छन्दोभिराच्छादनमेति दिग्भिः ॥
त्वष्टा लभेताङ्गविभागसिद्धिं मित्रेण चाप्नोति बलं स यज्ञः ॥ ३७ ॥
संवत्सरं तत्र ऋतून् प्रजाः पशूनिमांश्च लोकानयमभ्यजायत ॥
इन्द्रोऽयमात्मास्य जगत्प्रशासितुस्तैर्गर्भधानि भवन्ति पञ्चभिः ॥ ३८ ॥

संवत्सरोऽग्निः स हि पञ्च होता तत्राश्विनौ द्वौ वरुणश्च रुद्रः ॥
बृहस्पतिश्चेति सहर्त्विजः स्युस्ते सप्तविंशायतनं व्यचायन् ॥ ३९ ॥
ततो बभूवुः पशवः समग्रा दूर्वाश्च स्थावरजङ्गमा ये ॥
येऽप्राणिनो वा प्रभवन्ति पृथ्वीपृष्ठोपरिष्टात् पशवस्त उक्ताः ॥ ४० ॥

द्यौरन्तरिक्षं पृथिवी च सूर्यो वातश्च यज्ञः सह षड्भिरेतैः ॥
षड्ढोतृतामेव जगाम धाता तस्मादतः क्लृप्तिरियं प्रवृत्ता ॥ ४१ ॥

इन्द्रोऽर्यमा वा खलु सप्त होता महाहविः सत्यहविस्त्वयास्यः ॥
अच्युतपाजा उ अचित्तचित्तोऽनाधृष्य एवाऽप्रतिधृष्य एषः ॥ ४२ ॥
विधाय तत्रायतनं त एते स्तोमं नवत्रिंशमिमां प्रतिष्ठाम् ॥
होतारमप्यार्यमणं स्वहौषुः स चार्यमा यज्ञ इति ब्रुवन्ति ॥ ४३ ॥
[ तै. ब्रा. २।३।५ ]

द्यावापृथिव्योरितरेतरेणाभूत् संततिर्यज्ञत एव तस्मात् ॥
इतो यदेद्धव्यममुत्र सद्यो दिवोऽपि वृष्टिर्भवतीह भूमौ ॥ ४४ ॥
सर्वेऽपि लोका इतरेतरेण संतानिताः सन्ति यतस्ततस्ते ॥
अन्योन्यभोगाय भवन्ति सर्वे भूमेः स्वरायान्ति दिवश्च भूमिम् ॥ ४५ ॥

---

* एकैको वैमननायामिन्द्रः ॥ ( तै. ब्रा. १।५।९ )

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ४ | चतुर्होतारः | पृथ्वी प्रतिष्ठा | द्यौः प्रदिशः | त्वष्टा रूपाणि | मिथः वाचिर्वार्य्यम् | ० | ० | ० | सोमः | वीर इन्द्रः | २१ |
| ५ | पञ्चहोतारः | नास रथः | दक्षः | वरुणः | रुद्रः | बृहस्पतिः | ० | ० | अग्निः वरुणो वा | पशुमान् | २७ |
| ६ | षड्ढोतारः | द्यौः | अन्तरिक्षः | पृथ्वी | सूर्य्यः | वातः | यज्ञः | ० | धाता | ऋतुमान् | |
| ७ | सप्तहोतारः | महाहविः | सत्यहविः | अयास्यः | अचित्तपाजः | अचित्तचित्तः | अनाधृष्यः | अप्रतिधृष्यः | इन्द्रः अर्यमा व गृहपति | मिथ. सर्वेषां संतननम् | ३२ |

एतानि सत्त्राणि निरन्तराणि भवन्ति पञ्चापि कृतानि देवैः ॥
प्रजापतिः सोम उताग्निरेवं धातार्य्यमा होतृतयैषु वस्तुतः ॥ ४६ ॥
मुख्यैरमीभिः समभूदृत्विजोऽन्ये तेषांधुवस्तत्र प्रजेश्वरेण ॥
चक्षुःप्रजा-सोमतश्चौषधीश्चाग्निना पशून् धातृवशाद् ऋतूंश्च ॥ ४७ ॥
अथेन्द्रतोऽर्यमतोऽपि लोकान् मिथःसमस्तान् समतन्वतेमान् ॥
सोमेन चेन्द्रो जनितोऽग्निना चासुरा इतस्ततश्चयश्च नुन्नाः ॥ ४८ ॥
अपीन्द्रियं पुष्यति सप्तहोता स्वर्गाय हेतुः स च पञ्चहोता ॥
सोमो यशस्तेन यशः प्रतीयाचत्रं चतुर्होतृतया प्रपन्नम् ॥ ४९ ॥
[ तै॰ २।२।८ ]

यदेव किञ्चित् क्वचिदस्ति तच्चतुर्होतार एभ्योऽधि च यज्ञनिर्मितिः ॥
नैभ्यो विना सृष्टिरिहास्ति काचन प्राप्तोऽस्ति यज्ञोऽपि न तैर्विना क्वचित्॥५०॥

द्यावापृथिव्यात्मकसृष्टिरेषा यज्ञश्चतुर्होतृतयास्ति वस्तुतः ॥
आदित्यवाय्वग्नय एव चन्द्रो होतार एतेऽत्र भवन्ति नित्याः ॥ ५१ ॥
पञ्चेह भूतानि भवन्ति तेऽन्ये होतार उक्तास्तत एव यज्ञः ॥
स्यात्पञ्चहोता षडिहर्तवः स्युर्होतार इत्थं स परोऽस्ति यज्ञः ॥ ५२ ॥
भूर्लोकमारभ्य तु सत्यलोकावधि प्रतीता इह सप्तलोकाः ॥
होतार एते तत एव यज्ञः स्यात् सप्तहोताऽन्वयनाय तेषाम् ॥ ५३ ॥
प्रजापतिः कश्चिदिहैव आत्मा दिग्भ्यो दशभ्यः परिक्लृप्तमूर्त्तिः ॥
प्रजापतिः कश्चिदिहैव आत्मा दिग्भ्यो दशभ्यः परिक्लृप्तमूर्त्तिः ॥

आत्मानमात्मन्यमितं जुहोति यद्धोःस भूयान् भवति प्रजाभिः ॥ ५४ ॥
प्रजापतिर्यं पुरुषं ससर्ज तत्राग्निराविश्य तमत्तुमैच्छत् ॥
प्रजापतिर्यं पुरुषं ससर्ज तत्राग्निराविश्य तमत्तुमैच्छत् ॥
दहोत ने देव ततः स यज्ञानात्मस्पृतस्तानजुहोत् प्रजेशः ॥ ५५ ॥
तत्रैव आपोमय एक ऋत्विक् प्रजापतिःस्वं दशधा विधाय ॥
प्राणं जुहावैव ततः प्रकीर्णान्यङ्गानि सर्वाणि मुहुर्बभूवुः ॥ ५६ ॥
आदित्यवाय्वग्निसुधांशवस्ते स्युर्ऋत्विजश्चानु प्रजापतिं तम् ॥
होतार एते पुरुषस्य चत्वार्यङ्गान्युपौदन् स परोऽस्तियज्ञः ॥ ५७ ॥

पञ्चत्रिंशस्ते पशवो बभूवुस्तेऽङ्गान्युपोद्धमिह लोमचर्म ॥
मांसास्थिमज्जश्च तथर्तवः षट् तत्रर्तुधर्मान् सदृजुः स्वकाले ॥ ५८ ॥
सप्तत्रिंशः प्राणमया यतस्तेऽहोपुस्ततः सप्त बभूवुरस्मिन् ॥
प्राणा हि वागाद्य एवमन्ये सप्त त्वगाद्याः स हि सप्तहोता ॥ ५९ ॥
"सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ॥
सप्तापःस्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ६० ॥
[य. वा. सं. ३४।५५]

अथायमात्मा ध्रियते स यज्ञः प्रजापतिस्तिष्ठति तस्य नाभौ ॥
अन्तःप्रविष्टः स समानमात्मे शास्ता जनानां प्रतरामणीयान् ॥ ६१ ॥
सर्वाणि शृङ्गाणि प्रजाश्च सर्वाः सर्वे च होतार इहैकभूताः ॥
सर्वे चतुर्होतृविधिप्रयज्ञास्ते संपदं यान्ति हि तत्र देवैः ॥ ६२ ॥
प्राणस्त्रिवृत् पञ्चदशेन वृक्षः पक्षावभूतामपरश्च पूर्वः ॥
छन्दांस्यभूवन्नपराणि चास्मिन् प्रजापतिस्तेन दशात्वमागात् ॥ ६३ ॥
दशाहुतीरन्वभवत् पुरस्ताद् दैवी ततः संपदिहासुरी च ॥
मोक्षाय दैवी यतते तु संपद् बन्धाय संपत् प्रभुरासुरी स्यात् ॥ ६४ ॥
यावद्बलं सा लभतेऽत्र दैवी तावत् स विद्यासु भवेन्निविष्टः ॥
यावद्बलं चालभतासुरीयं तावत् स उत्साहमुपैति धृष्टः ॥ ६५ ॥
स एष यज्ञः प्रथमः समन्ताद् ब्रह्माणमाश्रित्य भवत्यजस्रम् ॥
अथैकविंशायतने विधत्ते सोऽयं चतुर्होतृविधेययज्ञम् ॥ ६६ ॥
देवासुराणामुदभूदिहेन्द्रो देवाश्च तं पर्य्यविशन् समन्तात् ॥
[तै. आ. २।२।१०]

आदित्यरुद्रा वसवश्च विश्वेदेवाश्च साध्यांगिरसश्च दिक्षु ॥ ६७ ॥
संवत्सरं तत्र ऋतून् प्रजाः पशूनिमांश्च लोकानयमभ्यजायत ॥
इन्द्रोऽयमात्मास्य शरीरशासितुस्तैर्भागधेयानि भवन्ति पञ्चभिः ॥ ६८ ॥
शरीरसंवत्सर एष इन्द्रतो वितायते तन्मय एव जायते ॥
यान्यस्य पर्वाणि दिनैश्च रात्रिभिः पक्षैश्च मासैरयनैश्च तान्यपि ॥ ६९ ॥
याश्च प्रजा ये पशवोऽत्र ताश्च ते चन्द्रस्य तस्यात्मन एव कल्पिताः ॥
प्रजारसासृक्प्रमुखाःप्रधानतः शरीरधर्म्माः पशवस्तु लोमवत् ॥ ७० ॥
नाभिस्तु पृथ्वी ध्रियते शिरो द्यौस्तथान्तरिक्षं हृदयं प्रपस्ते ॥
लोकाः शरीरे त इमे तदिन्द्रस्यार्थे निजं तन्त्रमुपावहन्ति ॥ ७१ ॥
सौरोऽपि चान्द्रोऽप्यथ पार्थिवोऽपि संवत्सरोऽथात्मनि सज्जते सः ॥
वाग् वा मनश्चाथ रथन्तरं वा बृहच्च मातापितृवद्भवन्ति ॥ ७२ ॥
संवत्सरे ये त्व विकारभावाः पक्षैश्च मासैरयनैरहोभिः ॥
तैरप्यमुष्यैव भवन्ति भोगा अध्यात्ममिन्द्रस्य शरीरभर्तुः ॥ ७३ ॥
पुत्रादयो गोऽश्वगजादयो वाऽऽत्मनैव सम्बन्धमिहोपयन्ति ॥
ते ते च लोकाः प्रभवन्ति तस्यात्मनःशरीरं पृथिवी तु लोकः ॥ ७४ ॥

इन्द्रस्य चात्मा निहितः परस्तात् स पञ्चहोता स सुपर्णकोशः ॥
रजोवृतः सा वसुधान्यमीषां विराट् सुराणामिदमायुरेषाम् ॥ ७५ ॥
षड्वर्तयोऽस्मिन् क्रमतो विशन्ति सोमस्य चाग्नेश्च विपर्ययेण ॥
बलस्य हानिश्च बलस्य वृद्धिः पर्यायतस्तेन भवत्यमीषाम् ॥ ७६ ॥
ततः परस्तादिह सप्तहोता प्रवर्तते तेन शरीरनिष्ठाः ॥
प्राणास्तु देवाननुपयन्ति देवा विस्रस्तमङ्गं प्रतिपूरयन्ति ॥ ७७ ॥
एकोऽयमात्मा तत इत्थमेतैरभ्यूढयज्ञैः परिवर्तमानः ॥
सहैव वाचा मनसा च फलतः प्राणेन संपन्नतमो विभाति ॥ ७८ ॥

तदित्थमात्माथ शरीरमेतद् द्यावापृथिव्यावथवाऽथवान्यत् ॥
यदेव किञ्चित् परिदृश्यते तत् संपद्यते पञ्चभिरेव यज्ञैः ॥ ७९ ॥
एतैर्हि पञ्चैव भवन्ति यज्ञा येभ्यो जगच्चक्रमिदं प्रवृत्तम् ॥
देवास्तदिन्द्राः पशवोऽन्नमेषां तेषां विकारा गतयश्च तैः स्युः ॥ ८० ॥
देवाश्च ये वा पशवस्तु ये वा नैभ्योऽतिरिक्तं किमपि प्रतीमः ॥
प्राणा हि देवाः पशवस्तु वाचः प्राणाश्च वाचः सह विश्वमेतत् ॥ ८१ ॥
द्यावापृथिव्योरितरेतरेणाभूत् संततिर्यज्ञत एव तस्मात् ॥
इतोवहेद्धव्यममुत्र सद्भ्यो दिवोऽपि वृष्टिर्भवतीह भूमौ ॥ ८२ ॥
सर्वेऽपि लोका इतरेतरेण संतानिताः सन्ति यतस्ततस्ते ॥
अन्योन्यभोगाय भवन्ति सर्वे भूमेः स्वरायान्ति दिवश्च भूमिम् ॥ ८३ ॥
स तायते चाहरहस्तु यज्ञः संतिष्ठते चाहरहः स यज्ञः ॥
स स्वर्गगत्यै तमिमं च युंक्ते स्वर्गं ततः सोऽहरहः प्रयाति ॥ ८४ ॥

पञ्चात्मयज्ञाः प्रकृतिस्थिता ये तेभ्योऽभ्यकल्पन्त विधेययज्ञाः ॥
पर्वद्वयादह्नि च मासि वर्षे वर्षेऽथ पर्वत्रयतोऽथ वर्षात् ॥ ८५ ॥
आदावहोरात्रमुखप्रवर्त्यं यदग्निहोत्रं तदिहाह्निकं स्यात् ॥
तत्रैकमृत्विग् दशहोतृकल्प्त्या प्रकल्पितं यज्ञमिमं वदन्ति ॥ ८६ ॥
स मासिकः पक्षमुखप्रवर्त्यो दर्शस्तथा यः खलु पूर्णमासः ॥
अध्वर्युरग्नीदपि नाम होता ब्रह्मेति चत्वार इहर्त्विजः स्युः ॥ ८७ ॥
ऋतुत्रयस्य प्रमुखे चतुर्भिर्मासैस्तु यज्ञोऽस्ति स पञ्चहोता ॥
पूर्वैश्चतुर्भिश्च सह प्रतिप्रस्थात्रा च पञ्चर्त्विज आहुरस्मिन् ॥ ८८ ॥
वर्षे प्रवर्त्योऽयनयोर्मुखेद्धिः स वार्षिकः स्यात् पशुबन्धयज्ञः ॥
पूर्वैश्च मैत्रावरुणेन चास्मिन् षड्ढोतृवत् षट् पुनरृत्विजः स्युः ॥ ८९ ॥
चेद् ब्राह्मणाच्छंस्यथ नेष्टृपोत्रच्छावाकमैत्रावरुणास्तथाग्नीत् ॥
होता च सप्तर्त्विज आचरन्ति संवत्सरादौ स हि सोमयज्ञः ॥ ९० ॥
संवत्सरोऽन्योऽवयवास्तथान्ये भवन्त्यृतुर्मास उताहरित्थम् ॥
एतेऽग्नयस्तेषु हुतादमीषां बलं क्रतूनामपि तत्समं स्यात् ॥ ९१ ॥

अन्ये तु यज्ञाः सकला अमीषां विकारभूता न ततः पृथक् स्युः ॥
एकं दशद्वाऽथ शतं सहस्रं चाह्नां नु सोमस्य विभाजकं स्यात् ॥ ९२ ॥

यदग्निराधीयत एष यज्ञो यज्ञाङ्गभूतो न ततः पृथक् स्यात् ॥
यास्त्वग्निचित्या इह पञ्च सोऽग्निर्विधीयते पञ्चभिरेव यज्ञैः ॥ ९३ ॥

य एष आत्मास्ति शरीरनिष्ठः स मानुषो नाम ततोऽतिरिक्तः ॥
संपाद्यते यज्ञत एष आत्मा दैवस्ततो लोकगतीः स याति ॥ ९४ ॥
यज्ञेषु यावद्भवतीह वीर्यं तावत् स लोकेषु लभेत भोगम् ॥
प्रातश्च सायं च परत्र लोकेऽग्निहोत्रहुत् सोऽन्नमुपाददीत ॥ ९५ ॥
यजेत दर्शं यदि पूर्णमासं पक्षे स पक्षे लभतेऽन्नभोगम् ॥
चतुर्षु मासेषु चतुर्षु चातुर्मास्यं यजन् भोगमिहाश्नुते सः ॥ ९६ ॥
षड्भिः स षड्भिः पशुबन्धयाजी वर्षे स वर्षे यदि सोमयाजी ॥
शते शतेऽब्देष्वयमग्निचिद्वा अश्नाति कामं न च वा स कामम् ॥ ९७ ॥
न यज्ञकृच्चेत् तदमुष्य चात्मा स मानुषोऽमुत्र हि न स्यनन्त्यः ॥
स्यात् कर्मविद्यावशतः स उच्चावचेषु भावेषु बलाद्विकृष्टः ॥ ९८ ॥
होतार एतेषु भवन्तु सप्त वा षट् पञ्च चत्वार इमे दशैव वा ॥
सर्वे चतुर्होतृतयैव भाषिता भवन्ति तस्येन्द्रतयेन्द्रकल्पितुः ॥ ९९ ॥

## उपसंहारः ।

अमूर्तकालौ रविसृष्टिनाशौ सृष्टिस्त्वहः स्यात् प्रलयस्तु रात्रिः ॥
मूर्तौ तु कालौ भवतोऽग्निसोमावग्निस्त्वहोरात्रिरथ तु सोमः ॥ १०० ॥
अपि द्विधाऽग्निः स ऋतं च सत्यं ऋतं त्वहः स्यादृतमस्ति रात्रिः ॥
[1] द्यावापृथिव्यौ तदहश्च रात्रिस्तथाहरिन्द्रोऽग्निरयं तु रात्रिः ॥ १०१ ॥
स्तोमा अहान्यत्र विभक्तिरह्नां रात्रिस्ततो यज्ञ इतश्च सृष्टिः ॥
तस्मादहोरात्रकृतेव सृष्टिर्भवत्यहोरात्रमयो विधाता ॥ १०२ ॥
यज्ञा अहःस्थाहवनाद् भवन्ति रात्र्यो विभागाय भवन्ति चाह्नाम् ॥
यस्माच्च यज्ञाद्भवतीह सर्वं तस्मादहोरात्रकृतैव सृष्टिः ॥ १०३ ॥
प्रजापतिर्यज्ञ इतो हि यज्ञादभूत् प्रजासृष्टिरिति स्म वृद्धाः ॥
तेनाप्यहोरात्रकृतैव सृष्टिः सिद्धा यतोऽहस्तु भवन्ति यज्ञाः ॥ १०४ ॥
राथन्तरी रात्रिरियत्यहर्येत् तदाहैनं सर्वेरथन्तरोऽग्निः ॥
बृहत्तथादित्य इहैव तेजोद्वये हुतं यत्र इति ब्रुवन्ति ॥ १०५ ॥
“बृहद्रथन्तराभ्यामिदमेति युक्तं यद्भूतं भविष्यच्चापि सर्वम् ॥
ताभ्यामियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्तमन्यत्” ॥ १०६ ॥

ऐ. आ. २५ अ.

*

प्राणो हि यज्ञः पवते तु योऽयं तद्वर्तनी वाक् च मनश्च कल्प्ते ॥
वाचा च यज्ञो मनसा च वृत्तो मनस्त्वहो वागियमस्ति रूपात् ॥ १०७ ॥

---

[1] “आग्नेयी वै रात्रिः । ऐन्द्रमहः” इति ( तै. ब्रा. २ । १ । २-॥ ३ । १ । ३ । ४ ॥ )

मनस्त्वहः स्यादथ वाक् तु रात्री ताभ्यां हि यज्ञोऽथ ततः प्रजास्ताः ॥
प्रजायमाना अपि यज्ञतस्ता भवन्त्यहोरात्रत एव जाताः ॥ १०८ ॥

तावद्दिवा यावदियन्ति देवा रात्रिस्तु सा यावदिमेऽसुराः स्युः ॥
देवासुराभ्यां भवतीह सर्वं तस्मादहोरात्रकृतैव सृष्टिः ॥ १०९ ॥
देवा अहः सन्त्यसुरास्तु रात्री देवासुराभ्यामिह दैववंशाः ॥
यां सृष्टिमिच्छन्ति हि निर्विशेषं तामप्यहोरात्रत एव विद्यात् ॥ ११० ॥
अहर्वियद् रात्रिरियं वियत्तद् व्योमेत्यहोरात्रमिति ह्यभिन्नम् ॥
व्योम्नस्ततो यां प्रवदन्ति सृष्टिं तामप्यहोरात्रत एव विद्यात् ॥ १११ ॥
निमित्तमह्नो रविरस्त्यसौ सन् रात्र्या निमित्तं तु रवेरसत्त्वम् ॥
तेनास्त्यहः सद्ध्यसती च रात्री तस्मान्न भिन्नः सदसत्प्रवादः ॥ ११२ ॥

प्राक्कर्मोदयतो हि यस्य मिथिलादेशे शरीरोदयः ।
श्रीविश्वेशदयोदयाच्च समभूत् काश्यां सुविद्योदयः ॥
राज्ञः प्रीत्युदयादभूज्जयपुरे संपत्तिभाग्योदयः ।
सिद्धस्तन्मधुसूदनात्तु विदुषोऽहोरात्रवादोदयः ॥ १ ॥
इतिवृत्तं सदसद्वा, रजो वियद्वाऽवरं तथावरणम् ।
अम्भोऽमृतमृत्यू वाऽहोरात्रौ दैवसंशयौ ब्रह्म ॥
एते द्वादशवादाः शास्त्रेऽस्मिन् ब्रह्मविज्ञाने ।
श्रूयन्ते, तत्रायं वादो नवमोऽत्र संपूर्णः ॥ २ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे द्वादशवादे
नवमोऽयमहोरात्रवादः संपूर्णः ॥ ९ ॥